KÂVYAMÂLÂ. 80.



THE

# PṚÂCHÎNA-LEKHA-MÂLÂ

OR

## A COLLECTION OF

### Ancient Historical Records.

Vol. III.

EDITED BY

PAṆḌIT BHAVADATTA S'ÂSTRÎ,

Son of

MAHÂMAHOPÂDYÂYA PANDIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRNAYA-SÂGARA' PRESS.

BOMBAY.

1903

Price 1 Rupee.

काव्यमाला. ८०.

# प्राचीनलेखमाला ।

(तृतीयो भागः ।)

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारककेदारनाथ-
कृपाङ्गीकृतशोधनकर्मणा
महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितः ।

स च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१९०३



मूल्यमेको रूप्यकः ।

# प्राचीनलेखमालाया अनुक्रमणी ।

लेखाङ्काः ।　　　　　　　　　　　　　　　　　　　　　　　　　　　　पृष्ठम् ।

# प्राचीनलेखमाला।

## (१२५)

### दूधपानीघाटे श्रीमदुदयमानराज्यप्राप्तिप्रशस्तिलेखः[1]।

ओम्।

श्रीरात्मदेहप्रतिमासहस्रमालोक्य भोगी[न्द्रफ]णामणिस्थम्।
ई[र्ष्याकु]ला करतलेन हरेः प्रहा[र] मुल्ला[सय]न्ती भवतु [श्रि]ये वः॥
बभूव पूर्वं मगधाधिराजः श्रीआदिसिङ्घो(सिंहो)ऽरिगजैकसिङ्घः(सिंहः)।
पराक्रमैर्यः प्रथितोऽद्वितीयः श्रीमज्ज[रासं]ध इव द्वितीयः॥

अस्यां भ्र[म]रशाल्मल्यां छिङ्गलायां [त]थैव च।
नभूतीष[ण्ड]के चापि बभूवाधिपतिः पुरा॥
अथ कस्मिंश्चि[त्स]मये वणिजो भ्रातरस्त्रयः।
तामलिप्ति[म]योध्याया ययुः पूर्वं वणिज्यया॥
भूयः प्रतिनिवृत्तास्ते स्वमावासं यियासवः।
प्रयोजनेन केनापि चिरं चक्रुरिह स्थितिम्॥
सुवर्णमणिमाणिक्यमुक्ताप्रभृति यैर्धनम्।
वित्तपस्पर्धयेवासीदपर्यन्तमुपार्जितम्॥
सर्वभूताश्रयाः सत्यदयादाक्षिण्यशालिनः।
स्रष्टार इव लोकस्य त्रयः क्षितिमुपागताः॥

---

१. लेखोऽयं गयाक्षेत्रतो दक्षिणस्या दिशि हजारीबागप्रान्ते दमदमापार्श्वे दूधपानीघाटे A. Cunningham महाशयेनोपलब्धः Professor F. Kielhorn, Ph. D., C. I. E. महाशयेन व्याख्यातः. स्पष्टतया कालनिश्चयो न जातः।

कैलासः कठिनः कलङ्कमलिनश्चन्द्रस्तुषाराचलः
प्रायस्तीक्ष्णकरप्रहारविवशो नित्यं गलत्येव हि ।
तारल्यं च समाश्रिता गुणवतो(युता) हारा इति प्रायशो
येषामत्र बभूव निर्मलगुणैः शीलस्य नैवोपमा ॥

दातृत्वेन समो बभूव न पुरा कर्णोऽपि येषामसौ
शौर्येणापि जगज्जिगीषुरगमन्नैवार्जुनस्तुल्यताम् ।
ये चासह्यपराक्रमक्रमपदाक्रान्तत्रिलोकीतला
वीरानाहवमूर्धसु प्रबलिनः पङ्कूनिवोच्चिक्षिपुः ॥

दिक्कामिनीतनुविलेपनचन्दनानि
राज्यश्रियः स्तनतटीविकटांशुकानि ।
अद्यापि चन्द्रकरहारतुषारभांसि
सर्वा दिशो धवलयन्ति यशांसि येषाम् ॥

विद्यासमुन्नतगुणा अपि न [स्मयान्धा]
नम्राः सुदूरमथ चोन्नतमूर्तिभाजः ।
निस्त्रिंशनिष्ठुरकराः कृपयाकुलाश्च
ये चार्थिकल्पतरवः शिवशौरिभक्ताः ॥

स श्रीमानादिसिङ्घो(सिंहो)ऽथ कदाचिदटवीमिमाम् ।
प्रारब्धी खेलनोद्युक्तः प्रविवेशावनीश्वरः ॥

आदिदेश समाहूय स पल्लीत्रितयाज्जनम् ।
यूयमद्यावलगकमस्मभ्यं ददताश्विति ॥

अत्रत्यस्तत्समाकर्ण्य [तूर्णं] बलपरिग्रहः ।
वणिजां भ्रातरं ज्येष्ठमुदयमानमुपागमत् ॥

राज्ञोऽवलगनार्थाय तमभ्यर्थ्य प्रयत्नतः ।
प्रेषयामास तं सोऽपि वल्लभोऽभून्महीपतेः ॥

अल्पैरहोभिरनुभूय नृपप्रसादं
श्रीपट्टबन्धमधिगम्य ततः क्रमेण ।

श्रीआदिसिङ्ह(सिंह)नृपतिं परिबोध्य तेन
संमानितो भ्रमरशाल्मलिपल्लिलोकः ॥
तुष्टास्ततो भ्रमरशाल्मलिवासिनस्ते
भूयस्तमागतमुपेत्य जनाः प्रणम्य ।
राजा भव त्वमिह पालय पल्लिमेता-
मित्यादि तत्परधियोऽभिदधुस्तमुच्चैः ॥
एवं नाम भवत्विति प्रतिवचस्तस्मात्समाकर्ण्य ते
तस्मै राज्यपदं ददुः क्षितिभृताप्याज्ञापितास्तत्कृते ।
सोऽस्मिन्विक्रमखण्डितारिसुभटश्रेणिः श्रुतार्थश्चिरं
राज्यं निर्जितसर्वपल्लिरकरोन्नाम्नोदयाख्यो नृपः ॥
यस्य त्यागनयान्वयोन्नतिगुणग्रामाधिपत्यार्जितां
कीर्तिं चन्द्रकरावदातसुभगामद्यापि सोत्कण्ठिताः ।
गेहासीनसुराङ्गनाजनकृतप्रीतिं सुरेन्द्रालय-
प्रान्तप्रोत्थितकल्पपादपतले गायन्ति सिद्धस्त्रियः ॥
आगत्योदयमानस्तु तैरेवाभ्यर्थितस्तदा ।
पल्लीद्वयेऽपि राज्यार्थं भ्रातरौ विससर्ज सः ॥
श्रीमाञ्छ्रीधौतमानाख्यः प्रख्यातो [न]भूतिषण्डके ।
वश्यात्मोदयमानस्य चिरं राज्यमचीकरत् ॥
प्रचण्डसुभटाटोपः खण्डितामित्रमण्डलः ।
अभूदजितमानोऽपि च्छिङ्गलायां महीपतिः ॥
पत्युर्भ्रमरशाल्मल्याच्छिङ्गला[न]भूतिषण्डकौ ।
वश्यौ बभूवतुः पूर्वमेवमेतौ यथाक्रमम् ॥
आरभ्योदयमानमादिपुरुषं गोत्रक्रमोऽयं महा-
नस्माकं परिवर्धमानमहिमेत्यालोक्य ते पूर्वजाः ।
असद्गोत्रभवात्कदाचिद····नाद्धयु(?)त्थानिकं स्यादिदं
सत्पल्लीद्वयमित्यवेत्य चखनुः(?) प्राशस्त्यवर्णानिमान् ॥

यावत्प्रान्तमरीचिरेचकचयव्याप्तत्रिलोकोच्छ्रयं
चक्रं चक्रधरो बिभर्ति गिरिशो यावद्भवानीपतिः ।
यावल्लोकसिसृक्षयाकुलमिलच्चिन्तालसश्चात्मभू-
र्गोत्रस्योदयमानदेवनृपतेस्तावत्स्थितिर्दृश्यताम् ॥

(एपिग्राफिआ इण्डिका—२।३४५-३४७)

---

# (१२६)

## कामरूपविषयाधीश्वरश्रीवैद्यदेवमहाराजानां शासनप्रशस्तिः[१] ।

ओं नमो भगवते वासुदेवाय । स्वस्ति ॥

अम्बरमानस्तम्भः कुम्भः संसारबीजरक्षायाः ।
हरिदन्तरमितमूर्तिः क्रीडापोत्री हरिर्जयति ॥
एतस्य दक्षिणदशो वंशे मिहिरस्य जातवान्पूर्वम् ।
**विग्रहपालो** नृपतिः सर्वाकारर्धिसंसिद्धः ॥
यस्य वंशक्रमेणाभूत्सचिवः शास्त्रवित्तमः ।
**योगदेव** इति ख्यातः स्फुरद्दोर्दण्डविक्रमः ॥
तस्योर्जस्वलपौरुषस्य नृपतेः **श्रीरामपालो**ऽभव-
त्पुत्रः पालकुलाब्धिशीतकिरणः साम्राज्यविख्यातिभाक् ।
तेने येन जगत्त्रये जनकभूलाभाद्यथावद्यशः
क्षोणीनायकभीमरावणवधाद्युद्धार्णवोल्लङ्घनात् ॥
यस्य शुद्धसचिवः पुराभवद्बोधिदेव इति तत्त्वबोधभूः ।
विश्व(ष्व)गेव विदितोऽद्भुतैर्गुणैरुज्झितात्मसदृशः क्षितावयम् ॥
अस्य **प्रतापदेवी** पत्नी धर्मर्द्धिकीर्तिविश्रान्तिः ।
आसीदसीमकान्तिः संतोषस्याकृतिः पत्युः ॥

---

१ प्रशस्तिरियं Mr R H. Brereton महाशयेन वाराणस्यध्यक्षेण लब्धा Mr. Arthur Venis, M. A. महाशयेन वाराणसीविश्वविद्यालयाध्यक्षेण प्रकाशिता.

अभूदमुष्यां तनयोऽस्य विश्रुतः श्री**वैद्यदेवः** परया श्रिया युतः।
यदुच्छलत्कीर्तिश(स)रोवरोद[रे] पद्माङ्कुराभः शिवभूधरोऽभवत् ॥
दैवज्ञेषु च तर्ककेषु च जनुर्दिष्टस्य दिष्टिश्रुते-
रत्नस्वप्नधृतीर्झटित्यरिभटैरुन्मुच्य संमूर्छितम्।
किं चैतन्निजबन्धुवृन्दनयनप्रोद्भूतहर्षाम्बुभिः
पारक्यप्रसरप्रतापदहनस्याभूद्विनिर्वापणम् ॥
सोऽयं **रामनरेन्द्रजस्य** सचिवः साम्राज्यलक्ष्मीजुषः
प्रख्यातस्य **कुमारपालनृपतेश्चि**त्तानुरूपोऽभवत्।
यस्यारातिकिरीटहाटककृतप्रासादकण्ठीरव-
ग्रासत्रासवशादपैष्यति विधोर्बिम्बाङ्करूपी मृगः ॥
सचिवसमाजश(स)रोजतिग्मभानुः प्रसरयशोम्बुधिरेष **वैद्यदेवः**।
सहजवदान्यतयैव चम्पकेशः सुजनमनःकुमुदेषु शीतरश्मिः ॥
यस्यानुत्तरवङ्गसंगरजये नौवाटहीहीरव-
त्रस्तैर्दिक्करिभिश्च यन्न चलितं चेन्नास्ति तद्गम्यभूः।
किं चोत्पातुककेनिपातपतनप्रोत्सर्पितैः शीकरै-
राकाशे स्थिरता कृता यदि भवेत्स्यान्निष्कलङ्कः शशी ॥
गौडेशस्य कुमारपालनृपतेर्दोर्वीर्यतेजस्पते-
स्त्रैलोक्योदरपूरिभूरियशसः प्रज्ञानवाचस्पतेः।
सप्ताङ्गक्षितिपाधिपत्वमभितः संचिन्तयन्नुग्रधीः
प्राणेभ्योऽप्यतिबन्धुरस्य सचिवः सोऽभूद्गुणिग्रामणीः ॥
एतादृशो हरिहरिद्भुवि सत्कृतस्य
श्रीतिङ्ग्यदेवनृपतेर्विकृतिं निशम्य।
गौडेश्वरेण भुवि तस्य नरेश्वरत्वे
श्री**वैद्यदेव** उरुकीर्तिरयं नियुक्तः ॥
स्रजमिव शिरस्यादायाज्ञां प्रभोरुरुतेजसः
कतिपयदिनैर्दत्वा जिष्णुः प्रयाणमसौ द्रुतम्।

तमवनिपतिं जित्वा युद्धे बभूव महीपति-
निजभुजपरिस्पन्दैः साक्षाद्दिवस्पतिविक्रमः॥

एतस्य प्रवरप्रयाणसमये पांशूत्करैः स्थण्डिल-
प्राये व्योमतलेऽर्कसप्तिकगणैर्लब्धोऽङ्घ्रियानश्रमः।
किं चाक्षिद्वयगोपनेन करयोरन्यक्रियास्वक्षमः
सुत्रामा नयनानिमीलनकरं कर्म स्वकं निन्दति॥

दोर्दण्डारणिजे हविर्भुजि भटव्रातेन्धनैरेधिते
संग्रामाध्वरपूजिते रिपुशिरःश्रेणीलसच्छ्रीफलैः।
कृत्वा होमविधिं परक्षितिभुजा दत्त्वाथ पूर्णाहुतिं
लब्धोदग्रयशो महत्फलमसौ श्रीवैद्यदेवो बभौ॥

यदुरुसमरमध्यात्खड्गघातोत्पतद्भिः
परसुभटशिरोभिर्व्योम कीर्णं निरीक्ष्य।
झटिति विसरराहुव्य(व्यू)हधीबिभ्यदर्कः
स्वरुचमपि रजोभिः प्रोञ्छयन्स्वं जुगोप॥

चन्द्रस्योद्भवभूर्महीध्रस(श)रणं सत्त्वप्रधानाशयः
पात्रश्रीमहितः स्फुरद्रसमयः सोऽयं गभीरः परः।
रत्नानां निलयः श्रियः कुलगृहं स्वान्तस्थितश्रीपतिः
स्यादेवं सदृशोऽम्बुधेर्यदि जलाधारोऽथवा लङ्घितः॥

ज्ञानैर्गीष्पतिरूर्जितैर्दिनपतिः सत्पौरुषैः श्रीपति-
र्धैर्यैरम्बुपतिर्धनैर्धनपतिर्दानैः स चम्पापतिः।
किं चैतेऽपि गिरोपमानविषयाः प्रायः प्रसिद्धेर्बला-
द्ब्रूमः किंतु वयं स्वयं स्वसदृशः सर्वैर्गुणानां गणैः॥

यस्य श्रीबुधदेव इत्यनुजभूः श्रीरामभद्रानुज-
प्रायस्तत्तदसीमनिर्मलगुणैर्धर्मर्द्धिशीलर्द्धिभूः।
दानैः शोभनपल्लवैर्द्विजकुलप्रीतिप्रदानैरपि
ख्यातः कल्पमहीरुहप्रतिकृतिर्दोर्वीर्यचञ्चद्यशाः॥

अथाभवत्कौशिकसंज्ञको मुनिर्मुनीन्द्रमुख्यो निजगोत्रपूरुषः।
पयोजजन्मास्यचयभ्रमश्रमाद्यदास्यपद्मे तु सुखं गिरा स्थितम्॥
एतद्वंशे महति **भरतः** प्रादुरासीद्द्विजाति-
भविग्रामे प्रविसरयशाः शासनोऽग्रे वरेन्द्याम्।
आस्तामन्यद्गुणगणसमाख्यानमाख्यानमात्रा-
द्यन्नाम्नोऽपि स्फुटति निखिलः कणिशानां(किल्बिषाणां)प्रपञ्चः॥
अस्य विप्रतिलको **युधिष्ठिरः** पुत्र इत्यभवत्सुधीश्वरः॥
शास्त्रवेदपरिशुद्धबोधभूः श्रोत्रियत्वविलसद्यशोनिधिः॥
**पाई**ति धर्मपत्नी धीरवरस्यास्य चित्तविश्रान्तिः।
अ[ा]सीदसीमकान्तिः शीलौदार्यश्रियां वसतिः॥
पूर्वपूर्वजनुर्जन्मकर्मपाकादभूत्सुतः।
तस्यैतस्यां द्विजाधीशपूज्यः श्री**श्रीधरः** परः॥
तीर्थेषु भ्रमणाच्छ्रुताध्ययनतो दानात्तथाध्यापना-
द्यज्ञानां करणाद्व्रतैकचरणात्सर्वोत्तरः श्रोत्रियः।
प्रातर्नक्तमयाचितोपवसनैर्येन स्वयं गुग्गुलो-
राकर्षाद्वरदः कृतोऽत्र हि कलौ श्री**सोमनाथः** प्रभुः॥
कर्मब्रह्मविदां मुख्यः सर्वाकारतपोनिधिः।
श्रौतस्मार्तरहस्येषु वागीश इव विश्रुतः॥
एतस्मै शासनं प्रादाद्वैद्यदेवक्षितीश्वरः।
वैशाखे विशु(षु)[व]त्यां च स्वर्गार्थं हरिवासरे॥

स्वस्ति हंसाकाञ्चीसमावासितश्रीमज्जयक(स्क)न्धावारात्परममाहेश्वरः परमवैष्णवः महाराजाधिराजः परमेश्वरः परमभट्टारकः श्रीमान्**वैद्यदेवदेवः** कुशली श्री**प्राग्ज्योतिषभुक्तौ कामरूपमण्डले वाडाविषये** भट्टगङ्गाधर-भुक्तक**शा(स)न्तिवाडामन्दरा**ग्रामीययथाप्रधानप्रतिवासिचट्टभट्टविसयि-लंकादिजनपदान् कर्षकांश्च यथात्यागं मानयति बोधयति समादिशति वः—'मतमस्तु भवताम्—'एतद्वयं चतुःसीमावच्छिन्नं परिबोधशुद्धम्

१. आदर्शे तु सर्वत्र सीमाशब्दस्तालव्यादिरेव दृश्यते.

अचट्टभट्टप्रवेशं सजलस्थलं भूच्छिद्रं चाकिंचित्करग्राह्यं चतुर्थाब्द सं वैशाखप्रथमादिना गुग्गुली श्रीश्रीधरशर्मणे चतुःशतिकं शासनीकृत्य प्रदत्तमस्माभिः । तदेतस्मिन्विधेया भवेत' इति । सं ४ सूर्यगत्या वैशाखदिने १ नि ॥०॥ सन्तिवडामन्दराग्रामयोरेकीभूयाष्टसीमान्निनयकृतः । पूर्वदिशस्तावद्दिग्दाण्डिधरमादाय यावत् पश्चिमकूलसीमा । ऐशानदिशः शिङ्गिआधरसीमालेङ्गवडाभोग्येकंसपलभू १॥ उत्तरदिशः कोण्टुवाडोङ्गीनडजोलीनवधरासीमा । शिरवडाशिलगुडिभोग्यं किंचिदतिक्रम्य जयरातिपोला उणैपोलाविरामादाय वायव्यदिशः पिपामुण्डा अश्वत्थसीमा अझडाचौवोल वुडिपोखि रिपूर्वधरकुलाचापडि अष्टबलपुराणधर्मालि पश्चिमायावत् । पश्चिमदिशः सीमा किंचिद्धरक्तित्वा नैर्ऋत्यदिशो धम्मालिमादाय नैपोश्शृङ्गारयो विवादभूमेर्वाध्यर्धमादाय लच्छुवडास्थितैकवाटीसमेतघाटचम्पकः सीमा वेलवणीपटानवपल । दक्षिणदिशः कुम्भकारभोग्यबहिःसीमा कोण्टोहाडाङ्कवोलयावत् हेलावणामुण्डमादाय दिग्दाण्डि यावत् अग्निदिशः सीमा । एवमष्ट सीमा द्वितीयपटकस्य चतुर्दशपङ्क्त्याः(?) ॥

सन्तिपाटकसंज्ञं तु मन्दराग्रामसंयुतम् ।
व(वा)डाविषयसंबद्धं भूच्छिद्रेणेति निश्चयात् ॥
सर्वायोपायसंयुक्तं करोपस्करवर्जितम् ।
यावच्चन्द्रार्कसंभोग्यं यावदिच्छाक्रियाफलम् ॥
जलस्थलखिलारण्यवाटगोवाटसंयुतम् ।

कोष्ठ(ष्ठे) यश्च करिस्य(ष्य)ति स्वयमिदं यः कारयिस्य(ष्य)त्यसौ
पुत्रादिक्षयमभ्युदीक्ष्य निरये कल्पान्तरं स्थास्यति ।
यः श्लाघ्यः परिपा[लयि]स्य(ष्य)ति सुतैर्वित्तैः स वर्धिस्य(ष्य)ते
स्वर्लोकं परिभुज्य यास्यति चिराद्विष्णोर्वरेण्यं पदम् ॥
यावद्भास्करहिमकरताराभूधरप[यो]धिवसुधाद्याः ।
तावद्विलश(स)तु नृपतेः कीर्तिः श्रीवैद्यदेवस्य ॥
इमां राजगुरोः पुत्रः श्रीमुरारेर्द्विजन्मनः ॥
पद्मागर्भोद्भवश्चक्रे प्रस(श)स्तिं श्रीमनोरथः ॥

देवोऽयं रिपुचक्रविक्रमकथाप्रत्यर्थिदोर्विभ्रमः
शश्वद्विश्वपरिश्रमन्नवनवोन्मीलद्यश[ा]ः **श्रीधरः** ।
एतस्मै मुदितो द्विजातिपतये धर्माधिकारार्पित-
श्री**गोनन्दन**कोविदैकवचसा प्रादादिदं सा(शा)सनम् ॥
**कर्णभद्रेण** भद्रेण शिल्पिनानल्पबुद्धिना ।
ताम्रं विनयनम्रेण निर्मितं साधुकर्मणा ॥

एतादृशे मुनिवचनानि भवन्ति—

स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्टायां कृमिर्भूत्वा पच्यते पितृभिः सह ॥
गामेकां स्वर्णमेकं वा भूमेरप्यर्धमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥
बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

(एपिग्राफिआ इण्डिका—२।३५०-३५४)

---

# (१२७)

## कान्यकुब्जाधीश्वरश्रीमदनपालतनयश्रीगोविन्द-चन्द्रमहाराजपुत्राणां शासनपत्रम्[१] ।

ॐ नमो भगवते वासुदेवाय ।

तमाद्यं सर्वदेवानां दामोदरमुपास्महे ।
त्रैलोक्यं यस्य वक्त्रीव क्रोडान्तःस्थं वलित्रयी ॥
वंसे(शे) **गाहडवालाख्ये** बभूव विजयी नृपः ।
**महीमल**सुतः श्रीमान्नलनाभागसंनिभः ॥

---

१. पत्रमिद Mr. R. F. Brereton महाशयेन वाराणस्यध्यक्षेण Arthur Venis M. A. संज्ञकस्य वाराणसीविश्वविद्यालयाध्यक्षस्य पार्श्वे प्रेषित तेन च प्रकाशितम्.

याते श्रीभोजभूपे विबुधवरवधूनेत्रसीमातिथित्वं
श्रीकर्णे कीर्तिशेषं गतवति च नृपे क्ष्मात्यये जायमाने।
भर्त्तारं यं धरित्री त्रिदिवविभुनिभं प्रीतियोगादुपेता
त्राता विश्वस्य पूर्वं समभवदिह स क्ष्मापतिश्चन्द्रदेवः॥
तस्मादभूद्रि(द्वि)षदिलापतिदन्तिसिंहः
क्षोणीपतिर्मदनपाल इति प्रसिद्धः।
येनाक्रियन्त वभु(बहु)शः समरप्रबन्धाः
संनर्तितप्रहतशत्रुकबन्धबन्धाः॥
तस्मादजायत नरेश्वरवृन्दवन्द्य-
पादारविन्दयुगलो ज्वलितप्रतापः।
क्षोणीपतीन्द्रतिलको रिपुरग(ङ्ग)भङ्गी
गोविन्दचन्द्र इति विश्रुतनामकीर्तिः॥
तिष्ठतो यस्य दोःस्तम्भे मत्तशौर्यैकदन्तिनः।
धनुर्गुणकिणश्रेणी मदराजीव लक्ष्यते॥

संवत्सहस्रैके द्विषष्ट्युत्तरशताभ्यधिके कार्तिकपौर्णमास्यां भौमे दिने। अङ्के[ना]पि संवत् ११६२ [कार्तिक]सुदि [१]५ भौमे अद्येह श्रीमद्विष्णुपुरावासितश्रीविजयकटके सकलकल्मषक्षयकारिण्यां गङ्गायां स्नात्वा यथाविधानं मन्त्रदेवऋषिमनुष्यभूतपितॄंस्तर्पयित्वा सूर्यं भट्टारकं संपूज्य भगवन्तं महेश्वरं समभ्यर्च्य विश्वाधारं वासुदेवं समाराध्य मन्त्रपूतं भु(हु)तवहं हुत्वा पञ्चालदेशे जीआवतीपत्तलायां उसिथाग्रामे समस्तविषयसा(पा)र्श्ववर्तिसमस्तमहत्तमजनपदान्संबोधयति समाज्ञापयति—यथा ग्रामोऽयं मया स्वसीमातृणयूतिगोचरपर्यन्तः सजलस्थलः साम्रमधूकः सगर्तोषरपाषाणः सनदीवनलोहलवणाकरः सदशापराधदण्डः साकाशपातालः स्वसीमाचतुराघाटविशुद्धान्तः पूर्वदत्तदेवब्राह्मणवर्जितः नलिनीदलगतजलवत्तरलतरं प्राणिनां जीवितं विज्ञाय करिकलभकर्णाग्रविलसितचपलां लक्ष्मीं विलोक्य जलबुद्बुदाकारं यौवनं परिज्ञाय कदलीदण्डवत्संसारमसारतरं समाकलय्य साविथदेशनिर्गताय वाजसनेयशाखामृगाय' बन्धु-

लगोत्राय बन्धुलाघमर्षणविश्वामित्रत्रिप्रवराय दीक्षित**नागानन्द**पौत्राय दीक्षित**पुरवास**पुत्राय यजुर्वेदविद्यानलिनीविकासनप्रत्यक्षभास्कराय दीक्षित**वील्हाका**य श्रद्धाविशुद्धमनसा महाराजपुत्रश्रीमद्गोविन्दचन्द्रदेवेन कुशपूतहस्तोदकेन कार्तिक्यां निमित्ते सम्यगाजू(ह्र)यास्मै ब्राह्मणाय मातापित्रोरात्मनश्च यशःपुण्यविवृद्धये चन्द्रार्कोदधिक्षितिपवनाम्बराणि यावच्छासनीकृत्य प्रदत्तः। मत्त्वा यद्दीयमानभागभागकूटकदशवधविंशतिछवथाकेरे(?)तुरुष्कदण्डप्रभृतिसर्वादायान् तत्सर्वमस्मै निवेदनीयम्।

ये यास्यन्ति महीभृतो मम कुले किंवा परस्मिन्पुर-
　स्तेषामेष मयाञ्जलिर्विरचितो नादेयमस्मात्कियत्।
दूर्वामात्रमपि स्वधर्मनिरता दत्तं सदा पाल्यतां
　वायुर्वास्यति तप्स्यति प्रतपनः श्रुत्वा मुनीनां वचः॥

अथात्र पौराणिकाः श्लोकाः—

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ॥
योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव वा।
तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये॥
बहुदि(भि)र्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवत्तत्र(वान्तप्र)तिमानि तानि को नाम साधुः पुनराददीत॥

असत्कुलं परमुदारमुदाहरद्भि-
　रन्यै(न्यै)श्च दानमिदमचाणु(भ्यनु)मोदनीयम्।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
　दानं फलं परयशःपरिपालनं च॥

षंख(शङ्खं) भद्रासनं छत्रं वराश्वा वरवारणाः।
भूमिदानस्य चिह्नानि मसं(फलं) [स्वर्गः] पुरंदर॥

स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्टायां कृमिर्भूत्वा पितृभिः सह मोदते ॥
प्रतीहार**गौतम**श्च **जागूक**श्च पुरोहितः ।
जननी **राल्हदेवी** च **वील्हण**श्च महत्तकः ॥
एषां संमतिं प्राप्य सम्यग्लिखितवानिदम् ।
नाम्ना **विजयदासा**ख्यः शासनं राजसंमतम् ॥

(एपिग्राफिआ इण्डिका—२।३५९-३६१)

---

# (१२८)

## मोकलमहाराजकारितशिवमन्दिरप्रशस्तिः[1] ।

ॐ नमः शिवाय ।

सिद्धार्थामरसुन्दरीकरवलत्सिन्दूरधारारुण-
श्रीगण्डस्थलमण्डलीयुगलसद्दानाम्बुपूरोज्ज्वलः ।
संध्याभ्रच्छुरिताग्रसानुनिपतन्नाकापगौघद्वयः
स्वर्णोर्वीभृदिव प्रयच्छतु शिवं देवो गजास्योऽव्ययम् ॥
वेदा वागिति शिष्टतामुपगतो यः कर्मणामीक्षिता
साक्षी तत्प्रतिभूः पुनर्भवति सन्सिद्धार्थसंदर्शनः ।
जात्यैवैषु विनश्वरेषु सकलं दाता विविक्तः फलं
देवः स्वस्तिकरः परः स सततं स्तादेकलिङ्गाभिधः ॥
भूमीभृत्स्वयमेधितस्थितिरियं गुर्वी नगा बन्धवो
विन्ध्योऽगस्त्यचरित्रतो न चकितः प्रास्थापयद्ब्राह्मणान् ।
कन्या मान्यतमा महोत्सवविधावित्येकमन्त्रोक्तितो
यामानीनयदर्चनाय गिरिजा विन्ध्यालया सावतात् ॥

---

१. अस्य प्रशस्तिभूतस्याधारभूता शिला मेवाडदेशान्तर्गतचित्रकूटनगरस्थशिवमन्दिरे उपलभ्यते. अस्याः प्रतिलेखः Dr. A. Fuhrer महाशयैः कृतः Dr. Burgess महाशयैः मह्यं दत्त इति Professor F. Kielhorn, Ph. D., C. I. E., महाशयाः.

कालिन्दीतटकुञ्जबद्धवसतिः सेयं प्रिया राधिका
सर्तव्यं ननु रुक्मिणी न भवती हुं चारुहासिन्यसि।
युक्तं ना[सि] कलावती सुविदितं त्वं सत्यभामेऽन्यथा
नोक्तासीति विनिह्नुतोक्तमुदितश्लेषोऽच्युतः पातु वः ॥
स्फारन्यायोऽन्ववायो गुहिलनरपतेरस्ति जाग्रत्प्रशस्ति-
र्व्यस्तीभूतान्तरायो वसतिरिह युगे धर्म्यकर्मोदयस्य।
शश्वद्यागानुरागे(ग)स्थिरविमलनिधौ भूरिभोगोनभागां
भूयो नूनां विधत्ते सपदि शतमखी यत्र संभूय शक्रः ॥
वाक्सेतोरचलन्मतिर्दिशि दिशि प्रख्यातमानोन्नति-
र्निर्यान्निस्वनवाहिनीपरिवृतो नानाधनैकाकरः।
अत्यक्तक्षितिविग्रहो मुनिकथागीतादिगोत्रस्थिति-
र्विन्ध्यो बन्धुरबन्धुतां वितनुते यस्योपपन्नश्रियः ॥
वंशे तत्रारिसिंहः क्षितिपतिरजनि क्षत्रनक्षत्रलक्ष्मी-
वीक्षादक्षोरुयुत्क्ष्माबहुलजरजनिध्वंसभास्वद्गभस्तिः।
विन्ध्यावन्ध्यप्रदेशस्फुरदमलखनिव्यक्तरत्नाकरत्व-
स्फारश्रीमेदपाटक्षितिब(व)लयवलद्दुग्धपाथोदचन्द्रः ॥
नरपतिरिरिसिंहः शस्त्रशास्त्रोपदेष्टा
वितरणरणकर्णो विश्वविख्यातवर्णः।
स्फुरदमलगुणौघः पुण्यगण्योरुनामा
नयविनयविवेकोद्यानपुंस्कोकिलः सन् ॥
बिभ्यत्सिंहपदादमुष्य सकरी नूनं मघोनो यतो
बाजी सत्र(त्र)हविस्तताध्वरभुवं नोच्चैःश्रवा गच्छति।
आहूतः कथमेरु वाहनमृते देवाग्रणीर्वृत्रहा
मेघं वाहनमातनोदयमतः सद्धोमधूमोद्भवम् ॥
कीर्तिः कौतुकिनी दिगन्तमगमत्कर्पूरपूरोज्व(ज्ज्व)ला
खेलन्ती निजवासिताभ्रमवशादालिङ्गिता दिग्गजैः।

क्षीराम्भोनिधिगाहनं तु विधिना कृत्वादरादुत्थिता
ब्रह्मादीननुयोक्तुमुत्तमगुणस्यास्य प्रगल्भा दिवम् ॥
विशिष्टजनसंगतौ व्यतरदेकलक्ष्यं यत-
स्ततोऽधिकतरं यशोऽलभत भोजभूमीपतिः ।
अयं कथमदःसमः कविभिरुच्यते वाददा-
द्विशेषविधिनान्वहं विविधलक्षभोजानपि ॥
निर्व्रीडो न महेश्वरो न कठिनो नाचेतनश्चिन्तितं
दातानेकगवीश्वरः परिवृढो नो भारती दुर्भगा ।
सेनानीर्न विपक्षसंगतिरतो नोच्चैःश्रवा वा हयो
नारामः कतिचित्तरुः कथमदः पुर्याः स धुर्या दिवः ॥
शूरः सूनृतवागनूनविभ[वो] वंशावतंसः सुत-
स्तस्य न्यक्कृतरत्नसानुगरिमा हम्मीरवीरो जयी ।
विख्यातः स्मररूपजित्वरवपुर्लक्ष्मीनिवासाच्युतो
वाग्देवीचतुराननो रिपुकुलप्लोषोग्ररूपो महान् ॥
हम्मीरः किल वैभवोचितविधिर्दित्सुः सहस्रं गवा-
मित्याकर्ण्य सहस्रगू रविशचीनाथौ भयं जग्मतुः ।
शश्वत्तद्रहसि स्थितान्मुररिपोः श्रुत्वा सहस्रं पुन-
र्धेनूनां समुपागतावतिमुदा तद्दानमेवेक्षितुम् ॥
कर्णादीनतिशय्य दिग्जयविधावादाय दिङ्मण्डली-
दण्डं दूरमपास्य कालमसकृद्दाता स्वयं दक्षिणाम् ।
इत्याकर्ण्य जनश्रुतीः परिभवं स्वं शङ्कमानोऽन्तकृ-
द्द्रष्टुं न क्षमते प्रजा मनुनये यस्मिन्महीं शासति ॥
प्रासादमासादितशातकुम्भकुम्भं वसद्देवमचीकरद्यः ।
अचीखनत्सागरकल्पमल्पेतरत्सरश्चूतवनीभिरिद्धम् ॥
संग्रामग्रामभूमौ सदिदमसिलता संगता पञ्चशाखे
सच्छाये श्यामलाङ्गी क्षतजजलवलत्पुष्टिरिष्टप्रचारा ।

चित्रं सूते विकोशा कुसुममतिमहत्कीर्तनीयं दिगन्ते
धा[म्ना]म्नाता नितान्तं दलयति नियतं वारणाङ्गे पतन्ती ॥
हम्मीरवीरो रणरङ्गधीरो वाङ्माधुरीतर्जितकेकिकीरः ।
धराधवालंकरणैकहीरस्तत्तद्धनीभूषितसिन्धुतीरः ॥
एतत्पाणौ कृपाणी द्विषदसुपवनाहारतोषं दधाना
कालाकारोरगीव स्फुरति सचकितं वीक्षिता भीतिहेतुः ।
नाधः काये कथंचिद्दशति बहुमता नो बिभीते विपक्षा-
त्स्वर्गे वासं क्ष[ता]नां वितरति रमते न द्विजिह्वेन चित्रम् ॥
पायं [पायं सुपीनः] परभटरुधिरं तन्महीगर्भजाता
खड्गः कालः कुतोऽयं कथमियमपरा कीर्तिरत्युज्व(ज्ज्व)लास्य ।
एकेनास्नायि नूनं रुददरिवनितानेत्रतोयेऽञ्जनाढ्ये
तासामुद्वर्तितेयं मृदुभुजब(व)लयस्वच्छचूर्णैरजस्रम् ॥
उद्यत्प्रौढप्रतापानलमुषितमहाबिम्बशोषो विवस्वा-
न्पश्चादुद्दामकीर्तिच्छुरिततरतनुः शीतरश्मित्वमेति ।
शङ्के रूपान्तरं स्वं कलयति स वपुर्भेदभीतो रणक्ष्मा
धीरे हम्मीरवीरे प्रति परसुभटान्संगरे संमुखस्थान् ॥
कुर्वन्पद्मे जनुः स्वं विधिरिति विधिद्दग्दृष्टसृष्ट्यप्रदिष्टो
नो पङ्के जन्मदोषं व्यजगणदतुलं तस्य रक्तेतरस्य ।
भूत्वा हम्मीरदेवक्षितिपतियशसः स्वच्छवर्णोपमेयो
गन्ता पुण्योपमानं दिशि दिशि सुचिरं सत्कवीनां सुखेषु ॥
गौरो गौरीशहासादपि रुचिररुचिश्चन्दनाच्चन्द्रतो वा
कान्त्या कर्णाटकान्तासितदशन[च]तुष्कानुमेया सुगेया ।
शेषस्याशेषवेषस्फुरदमृतरुचश्चारुसौन्दर्यधुर्या
कीर्तिर्यस्येन्दुमूर्तेः किल चरति दशाशान्तविश्रान्तयात्रा ॥
तस्मात्क्षेत्रमहीपतिः समभवत्ख्यातो गुणाम्भोनिधिः
शौर्यौदार्यमहत्व(त्त्व)सत्व(त्त्व)महितो धर्मो वपुष्मानिव ।

शक्रार्धासनभाजि येन जनके रत्नाकरालंकृति-
भूर्भुक्ता जितपूर्वराजगिरिमप्राप्तप्रभाशालिना ॥
हृदि विनिहितरामो योऽस्त्रविद्याभिरामो
मदनसदृशमूर्तिर्विश्वविख्यातकीर्तिः ।
समरहतविपक्षो लीलया दत्तलक्ष्मी-
र्नयनजितसरोजः प्रक्रियाक्रान्तभोजः ॥
संग्रामे दन्तिदन्तज्वलनकणमुचि प्रोल्लसद्वीरयोध-
स्फारोन्मुक्ताशुगालीनिबिडकवलिताशेषकाष्ठान्तराले ।
जित्वा दुर्गं समग्रं नरपतिमहितं साधुवादस्य सम्य-
क्स्तम्भं योधाद्धरित्र्यामरिकलपतगश्रेणिचण्डप्रदीपः ॥
आक्रान्ता वृषपुंगवेन विलसद्भासा चतुर्भिः पदैः
सम्यग्वीक्षणपालिता नवनवप्राप्तप्रकर्षोदया ।
प्रासोष्टामरनैचिकीव बहुशो रत्नान्यनर्घ्याणि गौः
शूरे कीर्तिपयो धराशतमखे यस्मिन्महीं शासति ॥
कीर्तिक्षीरोदपूरे बहुविधबिरुदप्रोल्लसद्वीचिमाले
कृष्णः शेतेऽस्य खड्गः सुखमुरुसमरे शेषमासाद्य शत्रोः ।
दृश्यन्ते राजहंसा दिशि दिशि न ततो मानसे लीयमानाः
सीदत्पक्षा विलक्षाः स्फुरति न कमलोन्मेषितापेक्षितैषाम् ॥
अस्यासिः कालरात्रिः स्फुरति किल भवन्मण्डले वैरि········
········[प्रो]द्भासिवेश्मप्रभवदहिभयं भूतराजोरुतापम् ।
पद्मोद्बोधो न चैषां भवति विघटते चक्रयो[गो] नियोगा-
द्भूरिर्जागर्ति भित्तिः पतति निजपथो नोज्झितः पक्षपातः ॥
भ्रातः कल्पतरो किमात्थ भगवन्हेमाचल श्रूयतां
कर्तुं क्षेत्रमहीपतिः प्रयतते दानानि पुण्याशयः ।
वर्ते[ऽहं स्व ?]करे गृहाङ्गणभुवि त्वं वर्तसे नित्यशः
क्रीडार्थं यदि [वा] ददाति हि तदा वक्तुं क ईष्टे जनः ॥

इत्थं दानकथा मिथो विजयते चिन्तामणिस्वर्गवी-
मुख्यानामपि दानशास्त्रविलसन्नाम्नाममुष्य प्रभोः।
उन्मीलच्छरदम्बुजामलदलस्वच्छायताक्षिस्फुर-
त्कोणस्थायुकमित्रवैरिपरिषत्संपद्विपद्वर्त्मनः॥
माद्यद्वेतण्डचण्डध्वनिभरविगलद्वीरवर्गोरुधैर्ये
स्फूर्जत्कोदण्डदण्डप्रपतदिषुचयच्छन्नसैन्येऽप्यनन्ये।
जन्ये प्राणैकपण्ये गणयति न गणं विद्विषां पुण्यराशि-
र्धन्यः क्षेत्रक्षितीशः प्रतिभटनृपतिक्ष्माकराकृष्टिदृष्टिः॥
मूर्च्छालं तु जडीभवच्छ्रुतिपथं संशुष्कितैकत्वचं
मीलन्तं च मुहुर्मुहुः शिथिलितं यान्तं न [वा] सुस्थितम्।
दारिद्र्योपहतं विबोधयति यद्दुष्टाहिदष्टं यथा
जाप्यं कर्णपथाश्रितं सुविमलं यन्नाममन्त्राक्षरम्॥
तत्सूनुः किल लक्षसिंहनृपतिः ख्यातो गुणग्रामणी-
रुद्यद्दानफलामलार्जुनयशोवल्लीमतल्लीतरुः।
यत्तेजःशिखिनो [वि]पक्षवनितानेत्राम्बुजातद्युतेः
काष्ठान्ताक्रमणं [झ]टित्यनुदिनं नाभूद्विचारास्पदम्॥
रामः किं जितदूषणः सुभरतो रामानुरागास्पदं
शत्रुघ्नः किमु लक्ष्मणोदयभरः सुग्रीव इद्धाङ्गदः।
तारावल्लभ उत्तमेन वपुषालंकारमा[या]दतो
यो रामायणनायकैकतनुतां द्रष्टुं विधात्रा कृतः॥
दानादुद्दामसामा शरणगतजनत्राणपाषाणसीमा
भीमासीमैकधामा शतमखपुरतो विद्विषा गीतनामा।
अक्षामारामदामा मखमुखविलसद्धूमधूमोच्चसामा
सल्लक्ष्माशेषरोमा धरणिसुरतरुर्लक्षसिंहः स धीमान्॥
वैरिक्षोणीन्द्रमत्तद्विरदमदनुदः सिंहतः शुद्धसारा-
दारादुद्गीतकीर्तेरमरपुरभिष[क्कान्ति]निर्णीतमूर्तेः।

दाने माने कृपाणे यशसि महसि [वा] साधुवाण्यां कृपाण्यां
वीराल्लक्षक्षितीशाज्जगति न हि परः ख्यातिभक्तिः सु[भु]क्तिः ॥
नीतिप्रीतिभुजार्जितानि [लक्ष]शो रत्नानि यत्नादयं
दायं दायममायया व्यतनुत ध्वस्तान्तरायां गयाम् ।
तीर्थानां करमाकलय्य विधिनान्यत्रापि युङ्क्ते धनं
प्रौढग्रावनिबद्धतीर्थसरसीजाग्रद्यशोऽम्भोरुहः ॥
संग्रामेषु गतागतानि विद[ध]ल्लक्षं परैर्लक्षितो
दत्वा(त्त्वा) लक्षमपि स्व[यं न] तनुते संतोषमब्जेक्षणः ।
कुर्वाणः किल कानकीमपि तुलां तत्खण्डबिम्बच्छला-
[ल्ल]क्षं स्वां तनुमातनोदिति नृपो लक्षप्रथोऽजायत ॥
दाने हेम्नस्तुलायां मखभुवि बहुधा शुद्धिमापादि[ता]नां
भास्वज्जाम्बूनदानां कुतुकिजनभरैस्तर्किता राशयोऽस्य ।
संग्रामे लुण्टितानां प्रतिनृपमहसां राशयस्ते किमेते
विन्ध्यं बन्धुं समेतुं किमु समुपगताः साधु हेमाद्रिपादाः ॥
रुद्धाशेषपदां शकाधिपकरव्यग्रीभवज्जीवनां
धीरोऽमूमुचदर्जुनीमिव गयां मायाविमुक्ताशयः ।
धर्मश्चास्य समस्तलोकमहितः [का]ष्ठां परामागतो
निः[सत्त्वी ?]कृतधर्मराजवसतेः पद्मालयासद्मनः ॥
मत्तुल्या [न]नु नाभवत्किल तुला पूर्वेति गर्वं तुला-
मुष्य क्षोणिपतेर्ध्रुवं कृतवतो गर्वासहिष्णोः पुरः ।
तस्यास्तस्य मुदानुदां विदधता धीरेण दत्तापरा-
सौ मानादधिकाधिकीकृतविधिः सद्यो वियद्धाटका ॥
संख्यातुं कथमीशते कविजना दानानि नानाविधा-
न्यस्याकृष्टसमस्तराजवसुधावित्तस्य चित्तोन्नतेः ।
लब्धा नोद्विजते वनीपकगणान्दत्वा(त्त्वा) न यत्कीर्तये-
त्पात्रं प्राप्य मुदान्वितस्तृणतुलां स्वर्णे समारोपयेत् ॥

तस्य क्ष्मावलयं नयेन नयतः संतोषमायु[ष्म]तः
संभूतः स्मरसुन्दरो गुरुनतः पुत्रः सुधीर्मोकलः ।
शक्त्या भूभृति दारुणं वितनु[ते] यत्तत्कुमारः पुरः
सर्वज्ञोऽस्ति यतस्ततोऽचलभुवो नाथस्तु पित्रा कृतः ॥
प्रासादा बहुशः समुन्नतियुजः क्षोणीभुजा कारिताः
शुद्ध्यन्मूर्धसु राजमानकनकप्रस्फारकुम्भश्रियः ।
नागेन्द्रा नु शिरःसु हाटकघटाना[धा]य लोलत्सुधा-
न्यातुं नाकमिवोत्थिता मखभुजां पीयूषपानोत्सुकाः ॥
अङ्गाः संप्राप्तभङ्गाः स्मृतघनविटपाः कामरूपा विरूपा
वङ्गा गङ्गैकसङ्गा गतविरुदमदा जातसादा निषादाः ।
चीनाः संग्रामदीनाः स्खलदसिधनुषो भीतिशुष्कास्तुरुष्का
भूमीपृष्ठे गरिष्ठे स्फुरति महिमनि क्ष्मापतेर्मोकलस्य ॥
मूर्धा सिन्दूररेखाशतमखधनुषा राजमाना गभीरं
कुर्वन्तः शब्दमुच्चै रदरुचिचपलाः स्निग्धतन्वा कचाभाः ।
संग्रामग्रामयाता रिपुकरिजलदाः प्राप्तकालोपयोगा
यस्येषुव्रातभिन्नाः खलु रुधिरजलं भूरि वर्षन्ति सद्यः ॥
अस्य प्रौढप्रयाणक्षणरणर[ण]कह्रेषमाणोरुमान-
स्फूर्जद्दर्वार्वव[र्य]क्रमणभरभवद्धूलिधारान्धकारम् ।
ना[शं ने]ता विवस्वानिति तु विरमतु ध्वस्तनेत्रप्रकाशः
स्वानश्वानस्ववर्णान्यदि परिचिनुते तत्स भाग्यं महीयः ॥
वासो नाशासु भास्वत्कररुचिररुचाभासितास्वस्य वैरा-
त्पारावारान्तरायादपि नहि गमनं दूरमस्मादकस्मात् ।
सेवाहेवाकमेवाचरत बहुमतं दत्त वित्तं नितान्तं
[मं]त्रोऽमात्यैरकारि प्रतिविमतसदो भूपतेर्मोकलस्य ॥
प्रुष्टप्रौढारिवर्गप्रथितपुरब(व)लद्धूमधूमप्रचारै-
र्धूम्रं ब्र[ब्र]ह्माण्डभाण्डोदरमतिविपुलं वीक्ष्य दक्षेषु मुख्यः ।

कीर्त्यालेपं सुधोत्थं कलयति बलवान्दिग्वधूकिंकराभि-
स्तारावद्बिन्दुवृन्दच्छुरणबहुरुचा योऽम्बरेणावृताभिः ॥
नेता पातोत्तराज्ञां यवननरपतिं लुण्टिताशेषसेनं
पेरोजं कीर्तिवल्लीकुसुममुरुमतिर्योऽकरोत्संगरस्थः ।
पल्लीशाक्रान्तिवार्ता कलयति कलया कीर्तिता यस्य हेलां
पञ्चास्यस्येव माद्यद्गजदलनरुचेर्लीलया रङ्कुभङ्गः ॥
आरूढः सविता तुलां कलयति द्राङ्नीचतां कन्यया
दूरं मुक्तपरिग्रहो बहुरुचा चित्रोल्लसद्धस्तया ।
धीरोऽयं पदमुत्तमं तु विधिना प्राप्तस्तुलां गाहते
कन्याभिर्व्रियतेतमां क्षितिभुजां श्रीमोकलक्ष्मापतिः ॥
मानत्राणमना मनागपि मनोरन्यूननीतिव्रतो
नो जानाति निजप्रतापमतुलं सिंहो यथा विक्रमम् ।
मन्ये भास्वरहेमराशिमिषतो धाता तुलायामधा-
देतस्मादपि सोऽगमच्च गुरुतामद्यापि जा[ना]ति किम् ॥
दृष्ट्वा हाटककोटिकूटमतुलं दानाय मानाधिकं
सद्यः शोधित[सूत्र]तैकमतयः संशेरते शाब्दिकाः ।
शक्रप्रार्थितहेमदे सुरतरौ किं किं नु चिन्तामणौ
हेमाद्रौ शकलीकृते किमु तुलाशब्दस्तु संकेतितः ॥
दीव्यत्तद्वीरतुङ्गत्तरतुरगवरव्रातजातोरुवात-
क्षुभ्यत्तत्क्ष्मोत्थरेणुक्षतनयनरुजाव्यग्रसूताः खरांशोः ।
मन्दायन्ते गतेश्वास्तत इव वनिता वैरिणां तद्दिनानां
यामाञ्जानन्ति दीर्घानवितथविरुदे मोकलेन्द्रे रणस्थे ॥
को वा नो वेद विद्वांश्चरमयुगकलावेकपादेव धर्मः
खञ्जन्नष्टावलम्बः किल चरतु कथं पीनपङ्के जनेऽस्मिन् ।
सोऽयं सद्वंशयष्टिं बहिरबहिरथो शुद्धसारोपपन्नं
प्राप्य श्रीमोकलेन्द्रं प्रविशति विपुलां मण्डलीं पण्डितानाम् ।

नूनं द्यूतविधावधान्मखभुजामीशः सुमेरुं पणं
    गण्यस्तत्र मनस्विनां व्यजयत श्रीमोकलक्ष्मापतिः।
तादृक्षाः क[थ]मन्यथावनितले हेम्नाममी राशयो
    नैषां दानविधावमुष्य च मनःपीडाकलापि क्वचित्॥
वह्नावह्नाय सर्पिःपतननवरुचौ भूमिधूमायमाने
    दूनां····म[क्षि ?]पन्तौ कथमुपकुरुते यागभागो मघोनः।
पुण्येनास्यैव जाने दिनमणिरयते सत्कराणां सहस्रं
    बिभ्रत्सद्योऽस्ततन्द्रः स्थगयति विधिना योऽयमक्ष्णां सहस्रम्॥
आरुह्यामलमण्डलोऽकृत तुलां यः पुष्करद्योतनं
    पुण्यश्रीः स कथं तथा प्रथमतो गण्यो न तेजस्विनाम्।
निष्पङ्का करलालिता वसुमती सद्राजहंसा यतो
    व(ब)न्धूनामुदयस्ततस्तदुदये स्यात्संपदामौचिती॥
पारावारस्य वेलातटनिकटमनु प्राप्तशैलाधिवासा
    शत्रुश्रेणी समग्रा निवसति सततं भीतभीता नितान्तम्।
जेतुं यात्रादसीया यदि भवति तदा वाजिराजीखुराग्र-
    त्रुट्यत्क्ष्माधूलिधारा स्थलयति जलधिं पारयानाय तस्य॥
आसाद्यातिथिमाश्रयं त्रिजगतां श्रीद्वारकानायकं
    प्रासादं रचितोपचारमकरोद्भूमीपतिर्मोकलः।
देवेनाम्बुजबान्धवेन चकितं यो वीक्षितः शङ्कया
    विन्ध्याद्रेर्गिरिसत्तमस्य नियतं मुक्तस्य वाग्बन्धनात्॥
यस्य प्रत्युप्तकर्मद्रवदखिलमहाधातुसंभारधारा-
    पातक्ष्मातापशुष्यद्दलबिलविलसल्लोललालः फणीन्द्रः।
व्याचष्टे स्पष्टमिष्टं ध्रुवमयमधुना भाष्यमाभाष्य शिष्यं
    स श्रीभर्तुः पुरस्ताज्जयति समपतिर्मोकलेन्द्रस्य कीर्तेः॥
सोढुं नेशः पयोधिः क्षणमपि विरहं द्वारकानाथ(य)कस्य
    प्रेम्णा पादोपमूलं स्वयमुपगतवान्यत्तडागच्छलेन।

नोदन्या कुम्भयोनेरतिपततितरामन्तरेणैनमेष्य-
ञ्शापान्तं मे विदध्यादयमिति विनयाद्विन्ध्य एवानयद्यम् ॥
विन्ध्यस्कन्धैकबन्धुर्निजविततिभरादन्धुतानीतसिन्धु-
र्नीरक्रीडत्पुरंध्रिप्रसभकुचतटाघातसीदत्तरङ्गः।
संतुष्यत्तोयजन्तुर्विविधनगनदीवेगसंरोधतन्तुः
सन्सेतुर्नेतुरस्य स्फुरति वसुमतीसिद्धिहेतुः सुकेतुः ॥
अमुष्य धरणीभृतो विषयमध्यवर्ती महा-
दरीवृतवपुष्टया [वि]वृतदूरगम्भीरतः।
म[हो]दर इवापरः परममानगम्यान्तरः
पवित्रतरकीर्तनो जयति चित्रकूटाचलः ॥
जायन्तां नाम कामं कुलधरणिभृतः सप्तश्रृङ्गौघतुङ्गा
वैचित्र्या चित्रकूटं तुलयितुमनलं तीर्थभूतप्रदेशम्।
मा भूवन्निर्झरिण्यो मदुदितजनुषो नीचगामानशौण्डः
श्रृङ्गे यः क्षीरवारांनिधिमधिततरामुद्यदम्भोजवासम् ॥
उद्दामग्रावनिर्यज्झरभरकणिकाजातसेकातरेक-
स्निह्यच्छालप्रवालप्रभवदुरुतराभोगसूनप्रसूतात्।
मध्वासारादपारादुप[ह्]तजनुषो दाववह्नेर्निदाघे
विष्वद्रीचो वनानि प्रसभपरिभवं नेह शैले विदन्ति ॥
एतस्मिन्सरिदस्ति निर्मलजला यस्यां निवापाञ्जला-
वुन्मीलत्तिलजातपातकवलव्यग्राः शफर्यश्चलाः।
क्रीडासंभ्रमविस्मृतान्सुबहुशो मज्जद्वधूनामहो
नेत्राणीव विलोपिकज्जलकणांश्चेतुं स्फुरन्ति स्फुटम् ॥
लङ्का किं नाम दुर्गं जलनिधिरचिता यत्र सा काल[काका ?]
[प्रा]वृट्का[ले] विवर्गैरपि गलितमदैर्या म्रियेतेति मानी।
यो धत्ते क्षीरवारांनिधिमुपरि परै राजहंसैरगम्य-
स्तद्दुर्गं चित्रकूटो जयति वसुमतीमण्डनं भूतिभूमिः ॥

सौभाग्यैकमहौषधिर्भगवती यस्मिन्भवानी स्वयं
जागर्ति प्रियसंनिधानवसतिः साध्वीजनानां गुरुः।
देवः सोऽपि समस्तनाकरमणीसंतानदामव्रज-
प्रश्च्योतन्मकरन्दबिन्दुसुरभिप्रस्फारनृत्याङ्गणः॥

सेवाहेवाकिदेवस्तुतहरचरितप्रोल्लसद्भावसंप-
त्सद्यःस्विद्यद्भवानीकृतसुखवसनस्फारसौरभ्यहारि।
यद्वारि प्रातिभाव्यं वहति मृगदृशां मज्जतीनामजस्रं
पातिव्रत्ये समन्तात्समधिकसुभगंभावुकत्वेऽपि शश्वत्॥

गिरिः कैलासो यद्दशमुखभुजोच्छासनदिना-
द्गलन्मूलस्थामा प्रभवति न नाद्यं विषहितुम्।
प्रदेशप्राग्भारप्र[कृ]तिरमणीये तदधुना
समाधीशः श्रीमानिह वसति गौरीसहचरः॥

एकैकग्रावतावत्कृतिमुषितमहासर्वकर्मीणमानं
कृत्वा प्रासादमाशामुखमुकुरमतिव्योमसीमानमस्य।
यस्याशेषोपचारक्षमधनमुदितारी..................
द्वीरः श्रीमोकलेन्द्रो धनपुरमुचितं ग्राममायामिसीमम्॥

अब्दे बाणाष्टवेदक्षितिपरिकलिते विक्रमाम्भोजबन्धोः
पुण्ये मासे तपस्ये सवितरि मकरं याति जीवे घटस्थ।
पक्षे शुक्लेतरस्मिन्सुरगुरुदिवसे चार्यमर्क्षे तृतीया-
तिथ्यां देवप्रतिष्ठामयमकृततरां मोकलो भूमिपालः॥

उन्मीलद्यागयात्रोद्यतसुरतरुणीगीतसंग्रामधामा
सुत्रामा यावदीष्टे त्रिदशपरपरीपालनस्पष्टनीतिः।
पर्यायोपात्तभूनां स्फुरति दशशती शेषमूर्ध्नां च याव-
त्तावत्प्रस्फारलक्ष्मीरवतु वसुमतीं मोकलेन्द्रस्य बाहुः॥

श्रीमद्दशपुरज्ञातिर्भट्टविष्णोस्तनूद्भवः।
नाम्नैकनाथनामायमलिखत्कृतिमुज्व(ज्ज्व)लाम्॥

अनेकप्रासादैः परिवृतमतिप्रांशुकलशं
गिरीशप्रासादं व्यरचयदनूनैरनुचरैः।
मनाख्यो विख्यातः सकलगुणवान्वीजलसुतः
सुतः शिल्पी जातो गुणगणयुतो वीसल इति॥
अतिप्रशस्तैरलिखत्प्रशस्तिं वर्णैरवर्णेन बहिष्कृतैर्यः।
श्रीमत्समाधीशमहेश्वरस्य प्रसादतोऽसौ चिरजीविनोऽस्तु॥
वी[जलस्य] सुतः शिल्पी मनाख्यः सूत्रधारकः।
तस्यात्मजेन वीसेन प्रशस्तिरियमुत्कृता॥
रुचिराक्षरमुत्कीर्णा प्रशस्तिरियमुज्व(ज्ज्व)ला)।
लिलेख वीसलः शिल्पी समाधीशप्रसादतः॥
संवत् १४८९ वर्षे माघसुदि (३) गुरुदिने.......

(एपिग्राफिआ इण्डिका—२।४१०-२१)

---

## (१२९)

## [1]श्रीकुन्तीमाधवभगवन्मन्दिरस्तम्भोत्कीर्णा प्रशस्तिः।

श्रीकान्तस्य निजोदरान्तरचरद्ब्रह्माण्डखण्डावन-
व्यापाराभिरतस्य वेद[शिर]सामावासभूमेर्हरेः।
नाभ्यम्भोरुहगह्वरापवरकादाविर्बभूवात्मभू-
र्भूतादिप्रकटप्रपञ्चरचनादक्षः पुराणोऽव्ययः॥
तत्पादाम्बुरुहान्महेन्द्रविनुताज्जज्ञे चतुर्थान्वय-
स्त्रैलोक्यैकगुरोर्हरेः पदतलाद्गङ्गाप्रवाहो यथा।
तस्मिन्विस्मितसूरिसंहतिनुतोऽभूदिन्द्रसेनो नृपो
राजा धर्मसुतेन संगरविधि[:] प्रीतेन पुत्रीकृतः॥

---

१. प्रशस्तिरियं गोदावरीतीरे पिठापुरनाम्नि ग्रामे कुन्तीमाधवनामकविष्णुमन्दिरमस्ति तत्र स्तम्भे उत्कीर्णेयमस्ति. सा च पृथ्वीश्वरदेवमहीपालल्लेखिता वर्तते इति. इयं च E. HULTZSCH, PH. D. महाशयैः प्रकाशिता.

प्रीतिः श्वेतातपत्रं कनकविरचितं दण्डमाखण्डलाभो
व्योम्नि क्षौमं वितानं सकलनृपजनप्रार्थ्यसिंहासनार्धम्।
नानावादित्रशङ्खध्वनिभिरभिनुतां मङ्गलालत्तिकां च
प्रादाद्धर्मात्मजोऽस्मात्तुहिनचयसिते चामरे चारुरूपे॥
अशेषसुखसंभोगभागधेयैकभा[ज]नम्।
मध्यदेशेऽभवत्तस्य स्थानं कीर्तिपुरं महत्॥
सोऽयं धर्मनृपालदत्तनिखिलक्ष्मापालचिह्नश्रिरं
राजत्प्राज्ययशोवितानरुचिभिर्भूमण्डलं मण्डयन्।
कुर्वन्सर्वसुधीधियः प्रमुदितास्तारागणैर्वावृतो
राजाराजत चातुरङ्गपृतनासंवेष्टितोऽस्मिन्पुरे॥
यातेषु केषुचिदशेषधराधिपेषु तद्वंशजेषु विजितारिपराक्रमेषु।
जज्ञे नयज्ञजनसंसदि कीर्तनीयः शास्ता समस्तजगतामथ कीर्तिवर्मा॥
तद्वंशो मल्लवर्माभूत्तत्सुतो रणदुर्जयः।
वैरिणो रणरङ्गस्थमीक्षितुं यं न सेहिरे॥
ततो निखिलभूपालमौलिलालितशासनः।
कीर्तिवर्माभवत्तस्य पुत्रोऽभूद्रणदुर्जयः॥
तत्पुत्रः कीर्तिवर्मा
अनेकहस्त्यश्वपदातिवर्गविनिर्जितारातिकुलः कलावान्।
शशास पृथ्वीं प्रथितप्रतापस्तदात्मजो मल्लनृपोऽतिवीरः॥
अथ त्रिनेत्रेण स पल्लवेन विधाय मैत्रीं विधिवद्विधिज्ञः।
जिगीषया दक्षिणदेशमुच्चकैः प्रतस्थिवानास्थितसिंहविक्रमः॥
सोऽयं गङ्गकलिङ्गवङ्गमगधान्भ्रान्पुलिन्दान्नृपा-
न्वीरः कुन्तलकेरलक्षितिपतीन्गौडान्सपाण्ड्याधिपान्।
जित्वा भोजमराटलाटकटकान्दैत्यानिवाखण्डलो
राजाभ्राजत षट्सहस्रजगतीमासाद्य सत्यव्रतः॥
विविधविभवराजद्राजसंघाभिरामं
निधिनिचयसमेतं सिद्धविद्याधराढ्यम्।

पुरमिव धनदस्य श्रीनिवासैकभूमि-
धनदपुरसमाख्यं तस्य राज्ञो बभूव ॥
तत्रायं धनदपुरे मुरारितुल्यः कल्याणैः स्वकुलपरम्परानुयातैः ।
कौन्तेयात्समधिगतैर्महीपचिह्नैः संयुक्तोऽशिषदवनीं स मल्लभूपः ।
तत एरुयवर्मा ततः कुडियवर्मा
तस्मान्मल्लमहीपतिः प्रतिबल[ध्वा]न्तौघधर्मद्युति-
र्जातोऽभून्निजखड्गखण्डितमहाचण्डाशनिः शाश्वतः ।
यो लोके गुणयोगतः पिडुवरादित्याभिधानं ययौ
दुष्प्रापं त्रिदशैरशेषजगतामीशैः समस्तैरपि ॥
तस्मादभूत्कुडियवर्मनृपः प्रमाथी
वैरिक्षितीशमदमानमनोरथानाम् ।
यद्युद्धभूमिषु मनीषितपूरुषाप्त्यै
गीर्वाणवारवनिता मुदिताश्चरन्ति ॥
तत्राखिलमहीचा[रु]पद्माकरसमृद्धिदः ।
विमलादित्यदेवोऽभूच्चालुक्यान्वयभूषणम् ॥
तस्याखिलक्षितिपमौलिकिरीटकोटि-
रत्नप्रभानिकरकान्तपदद्वयस्य ।
संग्रामभूमिषु चकार चिरं जिगीषोः
साहाय्यकं कुडियवर्मनृपोऽति[वी]रः ॥
ततः साहाय्यसंतुष्टः कुड्यवर्ममहीभृते ।
विमलादित्यभूपालो गुद्दवारद्वयं ददौ ॥
राजराजस्तु तत्पुत्रो राजराज इव स्वयम् ।
निखिलैश्वर्यदृप्तात्मा राजशेखरसंश्रयः ॥
सोऽयं सूर्यकुलामृतार्णवभवामम्मङ्गयम्बां सतीं
राजेन्द्रप्रियपुत्रिकां नृपवर[ः] श्रीराजराजस्तदा ।
नानाभूतसमस्तलोकविभवप्राप्तिप्रधानास्पदं
त्रैलोक्यैकगुरुर्यथा सरसिजां तत्रोपमेये हरिः ॥

अजनि निजभुजोद्यद्विक्रमाक्रान्तविश्व-
क्षितिभरणसमर्थः श्रीकुलोत्तुङ्गचोडः।
दिनकरमिव ताभ्यां यं कराकृष्यमाणा
प्रथित[ब]हलभासं राजलक्ष्मीः सिषेवे ॥
तस्मादाविरभूद्वीरो वीरचोडः प्रतापवान्।
कुमारः कुपितारातिराजन्यमदभञ्जनः ॥
श्रीकुलोत्तुङ्गचोडोऽपि पालयन्सकलामिलाम्।
वीरचोडकुमाराय प्रददौ वेङ्गिमण्डलम् ॥
कुब्ज्यवर्ममहीपालः परिपाल्य वसुंधराम्।
स्वराज्यभारमखिलं स्वपुत्रे स नियुक्तवान् ॥
एरयोऽभून्नृपस्तस्माद्धृत्रशत्रुपराक्रमः।
ततोऽभवन्नन्निराजः संहृतारातिसंहतिः ॥
तस्य प्रपञ्चितसमञ्चितपुण्यकीर्तेः पञ्चाभवन्निजभुजार्जितराज्यभाजः।
पुत्राः पवित्रचरिता विदुराख्यगण्डगोङ्कक्षमाधिपतिमल्लयपण्डसंज्ञाः ॥
तेषां गोङ्कमहीपालः पालयन्नन्ध्रमण्डलम्।
श्रीकुलोत्तुङ्गचोडाज्ञां दधानोऽप्यधिकं बभौ ॥
पुत्रस्तस्य समस्तराजनिकरप्रोद्यत्किरीटद्युति-
श्रेणिः शोणपदस्य गोङ्कनृपतेः श्रीचोडभूपोऽजनि।
यद्बाहायुगपालिता वसुमती स्वास्थ्यं परं व्यानशे
रामे राजनि राजलोकविनुते यावत्सुखं मेदिनी ॥
तस्य गोङ्कक्षितीशस्य भ्रातुर्गण्डस्य धीमतः।
बभूव विदुरो नाम तनयो विनयान्वितः ॥
अथ मथितवैरियूथे प्रथितगुणे वीरचोडनरपाले।
शासति राज्यं वेङ्गीमण्डलमाखण्डलोपमे रेजे ॥
तस्याखिलारिनरपालसमूहराज-
लक्ष्मीकचग्रहणलम्पटदक्षहस्तः।

श्रीवीरचोडनृपतेर्विदुरक्षितीशः
साचिव्यमाचरदयं चतुरप्रतापः ॥
विदुरो वीरचोडस्य शासनानुचरश्चिरम् ।
पाण्ड्यदेवं जिगायाजौ सामन्तगणसंयुतम् ॥
तस्मै श्रीवीरचोडक्षितिपतिरखिलक्ष्माभृतां विस्मितानाम-
मग्रे सिंहासनार्धं सकलनृपजनप्रार्थितं संदिदेश ।
देशं चाशेषसस्यप्रचुरफलयुतं सिन्धुयुग्मान्तराख्यं
प्रादात्प्रीतस्य भूयो विदुरनृपतये पातितारातिराजे ॥
अथ पृथुतरकीर्तिः श्रीकुलोत्तुङ्गचोडः
परनृपकुलमाथं गोङ्कभूपालपुत्रम् ।
सुतमिव परिगृह्यागर्हणीयस्वभावं
स्वतनयजनचिह्नैश्चोडभूपं युयोज ॥
ततश्चोडमहीपाय सूनवे स नृपोत्तमः ।
प्रीतः षोडशसाहस्रं प्रददौ वेङ्गिमण्डलम् ॥
सोऽयं चोडक्षितीशः प्रतिनृपतिकुलोन्मूलनाभीलभीमः
श्रीमद्वेङ्गीधरित्रीमभिमतफलदां पालयञ्छैलधीरः ।
रेजे राजीवराजन्निजनयनयुगो योगगम्ये पुराणे
पुष्णन्विष्णावभीक्ष्णं निखिलनृपजनाभ्यर्चितो भक्तियुक्तिम् ॥
तस्य त्रिवर्गसहचर्यतिमात्रपूर्णे
तारापतिप्रतिमवक्त्ररुचिः प्रियाभूत् ।
लक्ष्मीरिवाक्षयगुणा पतिदेवतानां
गुण्डाम्बिका धुरि सदा परिकीर्तनीया ॥
ताभ्यां शचीवासवसन्निभाभ्यामशेषलोकस्थितिहेतुभूतः ।
श्रीगोङ्कभूपोऽजनि राजलोककिरीटकोटीविलसन्निदेशः ॥
यद्युद्धेऽभिमुखा हताः किल पुरा देवत्वमाप्ता द्विषः
श्रुत्वा वारिधरध्वनी[न्] घनपथे लोकान्तरस्था अपि ।

तद्युद्धोद्यमभूरिभैरवबृहद्भेरीरवाशङ्कया
कार्येष्वीप्सितसिद्धिमस्य नितरामाशीर्भिराशासत ॥
येनाखिलक्षितितलत्रिदशालयानां
कूटेषु हाटकमया घटिता विरेजुः ।
कुम्भाः स्वकीयजयघोषणसंप्रयुक्त-
स्तम्भा इवाभ्रचर[सं]स्तुतकीर्तिनैव ॥
येन श्रीमद्भीमनाथस्य चक्रे शार्क्रं धाम प्रस्थितायाः स्वकीर्तेः ।
हेम्नो भूम्ना पादविन्यासहेतोः प्रासादाग्र्यं व्योमनि श्रेणिकेव ॥
यस्य श्रीकालहस्त्यद्रिमहेन्द्राचलमध्यगाः ।
भूपाः पुण्यप्रवीणस्य किङ्करा गोङ्कभूपतेः ॥
तस्य त्रिलोकगणनीयगुणाभिरामा
रामाजनेषु रमणीयविशेषमूर्तिः ।
सर्वाम्बिका तनुमती वसुधैव साक्षा-
दक्षीणपुण्यनिचया खलु धर्मपत्नी ॥
जातस्ताभ्यां परपुरजयी शूलपाणेरिवांशो
विद्वत्संघस्तुतशुभगुणो जन्मभूमिः कलानाम् ।
यन्नामैवाखिलरिपुकुलोत्सादकृन्मन्त्र उक्तो
दातार्थिभ्योऽर्थितगुरुतरं वीरराजेन्द्रचोडः ॥
येनाम्भोराशिभीमभ्रमितजलमिलद्ग्राहपाठीनसंघ-
प्रेङ्खत्कल्लोलमालाकलुषमनिमिषैः खातमादौ सरस्तत् ।
निःशेषं शोषयित्वावधि जलधिजलं कुम्भयोनिर्यथाद्यो(?)
भीमो भीतिं वितन्वन्द्रुतमितजगतां रावणो राघवेण ॥
यस्याविखण्डितविजृम्भितपुण्डरीक-
खण्डप्रभापटलपाण्डुतरेण नित्यम् ।
संछादिता वसुमती यशसा बभास
छत्रेण मौक्तिकमयेन विभूषितेव ॥

येनाराधनसाधनानि दधिरे भीमेश्वरस्यालये
सौवर्णान्यतिदीप्ररत्ननिकरैर्हेमप्रभा चार्पिता ।
यस्त्वक्षीणसुवर्णभारघटितं सद्रुक्मपीठस्थितं
कृत्वेन्द्रादिगणान्गुणैरतिययौ श्रीभीमनाथं मुदा ॥

कनत्कनकसंदोहकृतं मकरतोरणम् ।
योऽदाद्बालेन्दुचूडाय दाक्षाराममनिवासिने ॥

विद्युल्लतेव जगतीतलसंचरिष्णु-
रानन्ददा शशिकलेव सतां नितान्तम् ।
अक्काम्बिकेति तरुणीजनरत्नभूता
जाया स तस्य जगतीपतिसत्तमस्य ॥

जातस्ताभ्यां शिवाभ्यामिव सकलजगद्रक्षणैकान्तदक्षेः
साक्षाद्देवः कुमारः सकलनृपकलाकोविदो गोङ्कभूपः ।
यद्वैरिक्षोणिपालाः क्षणमपि निखिले क्ष्मातले नाप्तवन्तः
पादन्यासावकाशं वियति विदधिरे धाम तद्योग्यरूपाः ॥

यमर्थिसार्थाभिमतार्थदं क्षितौ क्षीणारिभूपालमवेक्ष्य नूनम् ।
स्वस्थोऽभवत्कल्पकभूरुहश्चिरं राजेन्द्रचोडप्रियपुत्रमुच्चैः ॥

संजीवनीव सकलस्य जनस्य नित्यं
रक्षाविधानचतुराभवदस्य पत्नी ।
लोकेषु यच्चरितमेव वदन्ति सन्तः
शास्त्रं नियामकमशेषसतीजनस्य ॥

या पर्वतापरमहीनृपवंशदुग्ध-
रत्नाकरादुदभवज्जगतां भवाय ।
पद्मालयेव हरिपादसरोजसक्ता
जायाम्बिकानिखिलसंपदवाप्तिहेतुः ॥

आस्थानमण्डपमखण्डितभोगभोग्यं
स्तम्भैः स्फुरत्परिकरैर्हरिनीलकान्तैः ।

श्रीपीठनामनि पुरे वसतोऽकरोद्या
कुन्तीमनोरथपथास्तिकरस्य विष्णोः ॥
प्राकारगोपुरमनोहरमेतदीयं
निर्माय देवनिलयं कमलालयं या ।
सुस्थाप्य तत्सहितमच्युतमर्हणाभि-
राराधयन्त्यभिमतानि फलान्यवाप्नोत् ॥
श्रीसिंहगिर्यधिपतेः परमस्य पुंसो
भक्तार्तिकर्तनविधानगृहीतमूर्तेः ।
हेमाङ्गनाम निखिलश्रुतिसारवेद्यं
प्रत्यक्षमक्रियत चारु यया जनस्य ॥
भास्वत्स्फाटिकशैलशृङ्गरुचिषु प्रोद्यत्प्रभामण्डला
डिण्डीरद्युतिदेवधामशिखरेष्वास्थापिता भूरिशः ।
सौवर्णः कलधौतभूध्रशिखरासीनस्य भानोर्ध्रुवं
बभ्रुर्विभ्रममभ्रचारिविनुताः कुम्भा गुणाढ्या यया ॥
ताभ्यां श्रीपृथिवीश्वरः स्वयमिवाशेषस्थितेः कारणं
देवः श्रीपृथिवीश्वरोऽजनि जनप्रस्तूयमानोदयः ।
यस्मिन्राजनि रक्षति क्षितितलं क्षीणारिवर्गे जनो
व्युत्पत्तिं रिपुचोरवादिषु न च प्राप्नोति शब्देष्वपि ॥
यस्यातिनिर्मलतरेण परीतमेत-
द्ब्रह्माण्डमाशु यशसा नितरां विभाति ।
धूमाङ्कधौतकलधौतकरण्डभाण्ड-
मध्यप्रविष्टमिव विष्टपवल्लभस्य ॥
यं गन्धसिन्धुरसमं सततप्रवृत्त-
दानार्द्रदक्षिणकरं किल वीक्ष्य नूनम् ।
दिक्कुम्भिनो निखिलभूभरणैकदक्षं
व्रीडामवाप्य खलु पाण्डुरतां भजन्ते ॥

ग्रामा विद्वज्जनेभ्यो विविधफलभरानम्रकम्रेद्धसस्या-
स्तीर्णास्तूर्णं तटाकास्तटवनकुसुमामोदितार्णः प्रपूर्णाः ।
देशे देशेऽब्धितुल्याः पृथुतरयशसा खानिता येन शश्व-
द्दत्ताश्चैवार्थसंघाः प्रियवचनसमं सूरिसंघेभ्य एव ॥
यात्राप्रारम्भशुम्भत्पटहपटुतरध्वानमाकर्ण्य तूर्णं
हित्वा देशां दिगन्तान्भयचकितदृशो व्याप्य यस्यारिसंघाः ।
किंस्वित्संवर्तमेघध्वनिरुत विकटप्रस्फुटत्काण्डघोषः
किं वा कल्पान्तवायुक्षुभितमिति मुहुश्चिन्तयन्तो भ्रमन्ति ॥
धर्मे धर्मजसंनिभेन जलधिस्तुल्योऽपि गाम्भीर्यतः
सन्मर्यादतया महत्त्वगुणतो रत्नाकरत्वादपि ।
क्षुभ्यत्पङ्ककलङ्ककल्मषतनुः क्षारस्वभावस्तुलां
नाम्नोद्धासुरमूर्तिनाखिलजगत्सेव्येन येनान्वहम् ॥
नित्यालंकृतसत्पथो बुधजनप्रार्थ्योदयोऽभीष्टदो
भक्तानामतुलप्रतापमहिमव्याप्ताखिलक्ष्मातलः ।
विश्वं लोकमनश्वरैर्निजकरैः पद्माकरं नन्दय-
ञ्श्रीपृथ्वीश्वरभूपतिर्विजयते भूमण्डले सूर्यवत् ॥
माता तस्य महीयसः सुरतरुच्छायेव संसेविना-
मिष्टार्थां ददती सती भगवते वेदान्तविद्यात्मने ।
श्रीधाम्ने नवखण्डवाडविदितं प्रोल्नाटिदेशे मुदा
विश्वस्य क्षितिमण्डलस्य तिलकं शालेयसंशोभितम् ॥
नागव्योमेन्दुरूपप्रमितशकशरन्मेषसंक्रान्तिकाले
पुण्ये पुण्यप्रवीणा विविधफलकुलालंकृतं ग्रामवर्यम् ।
श्रीपीठस्थाय शश्वच्छ्रुतिनिकरशिरोवर्तिने माधवाय
प्रादाद्द्रोङ्क्षितीशप्रियतरमहिषी विष्णवे जायमाम्बा ॥

शकवर्षंबुलु ११०८ गुनेण्टि मेषसंक्रान्तिनिमित्तमुन श्रीपीठापुरमुन श्रीकुन्तीमाधवदेवरकुं प्रोल्लु नाटिलोनि नवखण्डवाड अनियेडि ऊरु गृहक्षेत्रारामसहितमुगानखण्डमुन्नु श्रीमन्महामण्डलेश्वरवेलनाटिकुलोत्तुङ्ग-

राजेन्द्रचोडयराजुल कोडकुलु श्रीमन्महामण्डलेश्वरकुलोत्तुङ्गमन्मगोङ्कराजुल महादेवुलु जायमदेवुलु हविर्बल्यर्चनार्थमुन्नित्यनैमित्तिकमासोत्सवसंवत्सरोत्सवार्थमुन्नु गीतनृत्तवाद्यादिविविधभोगार्थमुङ्गानाचन्द्रार्कमुगानिच्चिरि। तत्र स राजराजपरमेश्वरो राजपुरंदरः परममाहेश्वरः श्रीगोङ्कभूपप्रियतनयः समधिगतसकलशास्त्रनयः पृथ्वीश्वरदेवमहीपालः खण्डितविरोधिमण्डलः प्रोलुनाटिविषयवासिनो राष्ट्रकूटप्रमुखान्सकुटुम्बिनः सर्वान्समाहूय मन्त्रिपुरोहितसेनापतियुवराजदौवारिकादिसमक्षमित्थमाज्ञापयति—अस्मन्मात्रा जायममहादेव्या प्रोलुनाण्टिविषये नवखण्डवाडनामा ग्रामो गृहक्षेत्रारामसहितो खण्डः श्रीपिठापुरवासिने भगवते श्रीकुन्तीमाधवदेवाय हविर्बल्यर्चनार्थं नित्यनैमित्तिकमासोत्सवसंवत्सरोत्सवार्थं गीतनृत्तवाद्यादिविविधभोगार्थं च दत्त इति विदितमस्तु वः। अस्य ग्रामस्य सीमानः पूर्वतः पेरावुगड्डु सीमा। आग्नेयत इन्दुरावसु सीमा। दक्षिणतः सूरे गुण्डगड्डु सीमा। नैर्ऋततः डोङ्किसूडियालु सीमा। पश्चिमतः कोम्मिनायकुचेडवु तूर्पूगड्डु सीमा। वायव्यतः वड्डुविगरुवु सीमा। उत्तरतः पुट्टलत्रोव एङ्गड्डु सीमा। ऐशतः सब्बालरावि सीमा। ई धर्मुवुनकुनेब्बरु विघ्नमु सेसिरेनि वारु पञ्चमहापातकमु सेसिन पापमुनं बोदुरु गं(ग)कडत वेयि गोवुलनुं वेवुरु ब्राह्मलनु बन्धिच्चिन पापमुनं बोदुरु।

बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिः॥

इति व्यासवचनाच्चायं धर्मः परिपालनीयः।

शत्रुणापि कृतो धर्मः पालनीयं प्रयत्नतः।
शत्रुरेव हि तच्छत्रुर्धर्मशत्रुर्न कस्यचित्॥

तस्मादयं धर्मः सर्वैः परिपालनीयः।

श्रीपृथ्वीश्वरभूपालनिदेशवशवर्तिना ।
अय्यपिल्लार्यवर्येण कृता शासनपद्धतिः ॥

श्रीपिठापुरमुन कण्टाचारलिखितम् ॥

(एपिग्राफिया इण्डिका—४ । ३९-४७)

---

# (१३०)

## श्रीशीलादित्यमहाराजनिर्मापितवापीप्रशस्तिपत्रम् ।[1]

ओं स्वस्ति । विजयस्कन्धावारात् खेटकवासकात् प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसंपन्नमण्डलाभोगसंसक्तप्रहारशतलब्धप्रतापात्प्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतः श्रेणीबलावाप्तराज्यश्रियः परममाहेश्वरश्रीभटार्कादव्यवच्छिन्नराजवंशान्मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मषः शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणताराातिचूडारत्नप्रभासंसक्तपादनखरश्मिसंहतिः सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनान्वर्थराजशब्दो रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसंपद्भिः स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयानः शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफलः प्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदयः पादचारीव सकलभुवनमण्डलाभोगप्रमोदः परममाहेश्वरः **श्रीगुहसेन**स्तस्य सुतस्तत्पादनखमयूखसंतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजी-

---

१. अस्याः प्रशस्तेराधारभूत संपुटितं ताम्रपत्रं काठियावाडदेशे गोहिलवाडप्रान्ते महुवापरिगणे लुसंडीग्रामे एकस्मिन्गृहे गोबन्धनाय कीलकखननसमये एकेन ब्राह्मणेन लब्धमासीत्. एतच्च ताम्रपत्रं गुर्जरभाषायां संक्षिप्तभूमिकां रचयित्वा Mr. Vajeshankar G. Oza महाशयेन Professor Bühler महाशयपार्श्वे प्रेषितमासीत्. अनेन च महाशयेन Th. von Schtscherbatskoi, Ph. D. एतन्महाशयपार्श्वे प्रेषितमासीत्. अनुपदोक्तमहाशयेन Mr. Vajeshankar G. Oza महाशयेन च संशोध्य व्याख्याय च प्रकाशितम्. समयश्चास्य गुप्तसंवत् ३५० (A. D. 669–70).

व्यमानसंपद्रूपलोभादिवाश्रितः सरभसमाभिगामिकैर्गुणैः सहजशक्तिशि-
क्षाविशेषविस्मापिताखिलधनुर्धरः प्रथमनरपतिसमतिसृष्टानामनुपालयिता
धर्मदायानामपाकर्ता प्रजोपघातकारिणामुपप्लवानां दर्शयिता श्रीसरस्वत्यो-
रेकाधिवासस्य संहतारातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसंप्राप्त-
विमलपार्थिवश्रीः परममाहेश्वरः **श्रीधरसेन**स्तस्य सुतस्तत्पादानुध्यातः
सकलजगदानन्दनात्यद्भुतमण्डलाग्रद्युतिभासुरतरांसपीठोदूढगुरुमनोरथम-
हाभारः सर्वविद्यापरापरविभागाधिगमविमलमतिरपि सर्वतः सुभाषितल-
वेनापि सुखोपपादनीयपरितोषः समग्रलोकागाधगाम्भीर्यहृदयोऽपि सुच-
रितातिशयसुव्यक्तपरमकल्याणस्वभावः खिलीभूतकृतयुगनृपतिपथविशोध-
नाधिगतोदग्रकीर्तिः धर्मानुपरोधोज्ज्वलतरीकृतार्थसुखसंपदुपसेवानिरूढ-
धर्मादित्यद्वितीयनामा परममाहेश्वरः **श्रीशीलादित्य**स्तस्यानुजस्तत्पादा-
नुध्यातः स्वयमुपेन्द्रगुरुणेव गुरुणात्यादरवता समभिलषणीयामपि राज-
लक्ष्मीं स्वधासक्तां परमभद्र इव धुर्यस्तदाज्ञासंपादनैकपरतयैवोद्वहन्
खेदसुखरतिभ्यामनायासितसत्त्वसंपत्तिः प्रभावसंपद्वशीकृतनृपतिशतशिरो-
रत्नच्छायोपगूढपादपीठोऽपि परावज्ञाभिमानरसानालिङ्गितमनोवृत्तिः प्रणति-
मेकां परित्यज्य प्रख्यातपौरुषाभिमानैरप्यरातिभिरनासादितप्रतिक्रियोपायः
कृतनिखिलभुवनामोदविमलगुणसंहतिः प्रसभविघटितसकलकलिविलसि-
तगतिः नीचजनाधिरोहिभिरशेषैर्दोषैरनामृष्टात्युन्नतहृदयः प्रख्यातपौरुषास्त्र-
कौशलातिशयगणतिथविपक्षक्षितिपतिलक्ष्मीस्वयंग्राहकप्रकाशितप्रवीरपुरुषः
प्रथमसंख्याधिगमः परममाहेश्वरः **श्रीखरग्रह**स्तस्य तनयस्तत्पदानुध्यातः
सकलविद्याधिगमविहितनिखिलविद्वज्जनमनःपरितोषातिशयः सत्त्वसं-
पदा त्यागौदर्येण च विगतानुसंधानाशमाहितारातिपक्षमनोरथाक्षभङ्गः
सम्यगुपलक्षितानेकशास्त्रकलालोकचरितगह्वरविभागोऽपि परमभद्रप्रकृति-
रकृत्रिमप्रश्रयविनयशोभाविभूषणः समरशतजयपताकाहरणप्रत्ययोदग्रबा-
हुदण्डविलङ्घितनिखिलप्रतिपक्षदर्पोदयः स्वधनुःप्रभावपरिभूतास्त्रकौश-
लाभिमानसकलनृपतिमण्डलाभिनन्दितशासनः परममाहेश्वरः **श्रीधरसेन**-
स्तस्यानुजस्तत्पादानुध्यातः सच्चरितातिशयितसकलपूर्वनरपतिरतिदुःसाध्या-

नामपि प्रसाधयिता विषयाणां मूर्तिमानिव पुरुषकारः परिवृद्धगुणानुराग-निर्भरचित्तवृत्तिभिर्मनुरिव स्वयमभ्युपपन्नः प्रकृतिभिरधिगतकलाकलापः कान्तिमान्निर्वृतिहेतुरकलङ्कः कुमुदनाथः प्राज्यप्रतापस्थगितदिगन्तराल-प्रध्वंसितध्वान्तराशिः सततोदितः सविता प्रकृतिभ्यः परं प्रत्ययमर्थवन्त-मतिबहुतिथप्रयोजनानुबन्धमागमपरिपूर्णं विदधानः संधिविग्रहसमासनि-श्चयनिपुणः स्थानेऽनुरूपमादेशं ददद्गुणवृद्धिविधानजनितसंस्कारः साधूनां राज्यशालातुरीयतन्त्रयोरुभयोरपि निष्णातः प्रकृष्टविक्रमोऽपि करुणामृदुहृ-दयः श्रुतवानप्यगर्वितः कान्तोऽपि प्रशमी स्थिरसौहृदोऽपि निरसिता दोषवतामुदयसमयसमुपजनितजनतानुरागपरिपिहितभुवनसमर्थितप्रथित-**बालादित्य**द्वितीयनामा परममाहेश्वरः **श्रीध्रुवसेन**स्तस्य सुतस्तत्पादपद्म-प्रणामधरणिकषणजनितकिणलाञ्छनललाटचन्द्रशकलः शिशुभाव एव श्रवणनिहितमौक्तिकालंकारविभ्रमामलश्रुतिविशेषः प्रदानसलिलक्षालिताग्र-हस्तारविन्दः कन्याया इव मृदुकरग्रहणादमन्दीकृतानन्दविधिर्वसुंधरायाः कार्मुके धनुर्वेद इव संभाविताशेषलक्ष्यकलापः प्रणतसामन्तमण्डलो-त्तमाङ्गधृतचूडारत्नायमानशासनः परममाहेश्वरः परमभट्टारकमहाराजाधि-राजपरमेश्वरचक्रवर्ती **श्रीधरसेन**स्तत्पितामहभ्रातृ**श्रीशीलादित्य**स्य शा-र्ङ्गपाणेरिवाङ्गजन्मनो भक्तिबन्धुरावयवकल्पितप्रणतेरतिधवलया दूरं तत्पा-दारविन्दप्रवृत्तया नखमणिरुचा मन्दाकिन्येव नित्यममलितोत्तमाङ्गस्या-गस्त्यस्येव राजर्षेर्दाक्षिण्यमातन्वानस्य प्रबलधवलिम्ना यशसां वलयेन मण्डमण्डितककुभा नभसि यामिनीपतेर्विडम्बिताखण्डपरिवेषमण्डलस्य पयोदश्यामशिखरचूचुकरुचिरसह्यविन्ध्यस्तनयुगायाः क्षितेः पत्युः **श्रीडे-रभट**स्याङ्गजः क्षितिपसंहतेरनुरागिण्याः शुचियशोंशुकभृतः स्वयंवरमा-लामिव राज्यश्रियमर्पयन्त्याः कृतपरिग्रहः शौर्यमप्रतिहतव्यापारमानमित-प्रचण्डरिपुमण्डलं मण्डलाग्रमिवालम्बमानः शरदि प्रसभमाकृष्टशिलीमु-खबाणासनापादितप्रसाधनानां परभुवां विधिवदाचरितकरग्रहणः पूर्वमेव विविधवर्णोज्ज्वलेन श्रुतातिशयेनोद्भासितश्रवणः पुनः पुनरुक्तेनेव रत्ना-

लंकारेणालंकृतश्रोत्रः परिस्फुरत्कटकविकटकीटपक्षरत्नकिरणमविच्छिन्नप्रदानसलिलनिवहावसेकविलकसन्नवशैवलाङ्कुरमिवाग्रपाणिमुद्वहन् धृतविशालरत्नावलयजलधिवेलातटायमानभुजपरिष्वक्तविश्वंभरः परममाहेश्वरः **श्रीध्रुवसेन**स्तस्याग्रजोऽपरमहीपतिस्पर्शदोषनाशधियेव लक्ष्म्या स्वयमतिस्पष्टचेष्टमाश्लिष्टाङ्गयष्टिरतिरुचिरतरचरितगरिमपरिकलितसकलनरपतिरतिप्रकृष्टानुरागरसरभसवशीकृतप्रणतसमस्तसामन्तचक्रचूडामणिमयूखखचितचरणकमलयुगलः प्रोद्दामोदारदोर्दण्डदलितद्विषद्वर्गदर्पः प्रसर्पत्पटीयःप्रतापप्लोषिताशेषशत्रुवंशः प्रणयिपक्षनिक्षिप्तलक्ष्मीकः प्रेरितगदोत्क्षिप्तसुदर्शनचक्रः परिहृतबालक्रीडोऽनधःकृतद्विजातिरेकविक्रमप्रसाधितधरित्रीतलोऽनङ्गीकृतजलशय्योऽपूर्वपुरुषोत्तमः साक्षाद्धर्म इव सम्यग्व्यवस्थापितवर्णाश्रमाचारः पूर्वैरप्युर्वीपतिभिस्तृष्णालवलुब्धैर्यान्यपहृतानि देवब्रह्मदेयानि तेषामप्यतिसरलमनःप्रसरमुत्संकलानानुमोदनाभ्यां परिमुदितत्रिभुवनाभिनन्दितोच्छ्रितोत्कृष्टधवलधर्मध्वजप्रकाशितनिजवंशो देवद्विजगुरुं प्रति यथार्हमनवरतप्रवर्तितमहोद्रङ्गादिदानव्यसनानुजातसंतोषोपात्तोदारकीर्तिपङ्क्तिपरम्परादन्तुरितनिखिलदिक्चक्रवालः स्पष्टमेव यथार्थधर्मादित्यापरनामा परममाहेश्वरः **श्रीखरग्रह**स्तस्यानुजन्मनः कुमुदखण्डश्रीविकासिन्या कलावतश्चन्द्रिकयेव कीर्त्या धवलितसकलदिङ्मण्डलस्य खण्डितागुरुविलेपनपिण्डश्यामलविन्ध्यशैलविपुलपयोधराभोगायाः क्षोण्याः पत्युः **श्रीशीलादित्यस्य** सूनुर्नवप्रालेयकिरण इव प्रतिदिनसंवर्धमानकलाचक्रवालः केसरीन्द्रशिशुरिव राजलक्ष्मीमचलवनस्थलीमिवालंकुर्वाणः शिखण्डिकेतन इव रुचिमच्चूडामण्डनः प्रचण्डशक्तिप्रभावश्च शरदागम इव प्रतापवानुल्लसत्पद्मः संयुगे विदलयन्नम्भोधरानिव परगजानुदय एव तपनबालातप इव संग्रामे मुष्णन्नभिमुखानामायूंषि द्विषतां परममाहेश्वरः **श्रीशीलादित्यः** कुशली सर्वानेव समाज्ञापयति—अस्तु वः संविदितम् । यथा मया मातापित्रोः पुण्याप्यायनाय द्वीपविनिर्गततच्चातुर्विद्यसामान्यडौण्डव्यसगोत्रवाजसनेयिसब्रह्मचारिब्राह्मणधनपतिपुत्रब्राह्मणभट्टीश्वराभ्यां सोदरभ्रा-

तृभ्यां सुराष्ट्रेषु मधुमतीद्वारे देसेनकग्रामे पूर्वसीम्नि पञ्चपञ्चाशद्भूपादावर्तपरिसरा वापी। यस्या आघाटनानि—पूर्वतः पिञ्छकूपिकावहः, दक्षिणतः ब्राह्मणबावप्रत्ययक्षेत्रं मल्लतटाकश्च, अपरतः ग्रामनिपानकूपकः, उत्तरतः मूलवर्मपाटकग्रामसीमा, तथा पूर्वदक्षिणसीम्नि कविट्टिकाक्षेत्रखण्डं सप्ततिभूपादावर्तपरिमाणम्, यस्य पूर्वतः विशालपाटकग्रामसीमा, दक्षिणतः शिवत्रात इज्जतग्रामसीमा, अपरतः विशालपाटकग्रामसीमा, उत्तरतः विशालपाटकग्रामसीमा, तथा एतत्सीम्नि द्वितीयक्षेत्रखण्डमुच्चासंज्ञितनवतिभूपादावर्तपरिमाणम्, यस्य पूर्वतः विशालपाटकग्रामसीमा, दक्षिणतः विशालपाटकग्रामसीमा, अपरतः पिञ्छकूपिकावहः, उत्तरतः थेरकसत्कौटुम्बक्षेत्रम्, तथा पूर्वसीम्नि तृतीयखण्डं विंशतिभूपादावर्तपरिमाणम्, यस्य पूर्वतः माणइज्जिका नदी, दक्षिणतः बप्पकप्रकृष्टक्षेत्रम्, अपरतः ब्राह्मणस्कन्दसत्कब्रह्मदेयक्षेत्रम्, उत्तरतः ईश्वरप्रत्यक्षेत्रम्, एवमिदमाघाटनविशुद्धं वापीसमन्वितं क्षेत्रखण्डत्रयं सोद्रङ्गं सोपरिकरं सभूतवातप्रत्यायं सधान्यहिरण्यादेयं सदशापराधं सोत्पद्यमानविष्टिकसर्वराजकीयानामहस्तप्रक्षेपणीयं पूर्वप्रत्तदेवब्रह्मदेयरहितं भूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनं पुत्रपौत्रान्वयभोग्यमुदकातिसर्गेण धर्मदायो निसृष्टः। यतस्तयोः समुचितया ब्रह्मदेयस्थित्या भुञ्जतोः कर्षतोः कर्षयतोः प्रदिशतोर्वा न कैश्चिद्व्यासेधे वर्तितव्यम्। आगामिभद्रनृपतिभिरप्यस्मद्वंशजैरन्यैर्वा अनित्यान्यैश्वर्याण्यस्थिरं मानुषं सामान्यं च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्चेति। उक्तं च—

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य सदा फलम्॥

यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत॥

षष्टिं वर्षसहस्राणां स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥

दूतकोऽत्र राजपुत्रध्रुवसेनः ।

लिखितमिदं संधिविग्रहाधिकृतदिविरपतिश्रीस्कन्दभटपुत्रदिविरपति-श्रीमदनहिलेनेति। सं. ३००।९० फाल्गुन व. ३ स्वहस्तो मम ।

(एपिग्राफिया इण्डिका—४।७६-८१)

---

## (१३१)

### [१]मल्लिदेवमन्मसत्यमहाराजयोः प्रशस्तिपत्रम् ।

श्रीभर्तुर्नाभिगम्भीरसरःसरसिजादभूत् ।
पद्मभूर्भूतलोकानामेकस्मादुद्भवो यतः ॥
मानसस्तस्य पुत्रोऽत्रिरत्रेरमृतदीधितिः ।
सोमश्चूडामणिः सोमवंशकर्ता ततो बुधः ॥
ततः पुरूरवा नाम चक्रवर्ती सुविक्रमः ।
तस्मादायुरभूत्तस्मान्नहुषोऽथ पुरुस्ततः ॥

ततो जनमेजयस्ततः प्राचीशस्तस्मात्संयातिः सार्वभौमस्ततो महाभीमः। इत्थमनेकनरपतिषु गतेषु पाण्डुर्नाम नरपतिरुद्बभूव। पुत्रास्तस्य धर्मभीमार्जुननकुलसहदेवाः पञ्चेन्द्रियवत्पञ्च स्युर्विषयग्राहिणः। तत्र—

येनादाहि विजित्य खाण्डवमठो गाण्डीविना वज्रिणं
युद्धे पाशुपतास्त्रमन्धकरिपोश्चालावि(भि)दैत्यान्बहून् ।
इन्द्रार्धासनमध्यशायि जयिना यत्कालकेयादिका-
ञ्जित्वा स्वैरमकारि वंशविपिनच्छेदः कुरूणां विभोः ॥

ततोऽर्जुनादभिमन्युस्ततः परीक्षित्ततो जनमेजयस्ततः क्षेमकस्ततो नरवाहनस्ततः शतानीकस्तत उदयनस्तत्प्रतित्रि(भृ)तिष्वविच्छिन्नसंतानेष्वयोध्यासिंहासनासीनेष्वेकोनषष्टिचक्रिवर्तिषु गतेषु तद्वंश्यो **विजयादित्यो** नाम राजा विजिगीषया दक्षिणापथं गत्वा त्रिलोचनपल्लवमधिक्षिप्य दै-

---

१. इयं च प्रशस्ति. पीठापुरग्रामे कुन्तीमाधवमन्दिरस्थकीर्तिस्तम्भे दक्षिणभागे प्रारब्धा पूर्वभागे समाप्ता चोपलभ्यते सेय E. Hultzsch, PH. D. महाशयेन प्रकाशिता. (1195-96 A. D.)

वदुरीहया लोकान्तरमगमत् । तस्मिन्काले महादेव्यन्तर्वत्नी पुरोहितेन सार्धं मुडिवेमुनामाग्रहारमुपगम्य तद्वास्तव्येन **विष्णुभट्ट**सोमयाजिना दुहितृनिर्विशेषमभिरक्षिता सती नन्दनं **विष्णुवर्धन**मसूत । तस्य कुमारस्य मानव्यसगोत्रहारितीपुत्रद्विपक्षक्रमोचितानि कर्माणि कारयित्वा तमवर्धयत् । स च मात्रा विदितवृत्तान्तः सन्निर्गत्य चालुक्यगिरौ नन्दां भगवतीं गौरीमाराध्य कुमारनारायणगणांश्च संतर्प्य श्वेतातपत्रैकशङ्खपञ्चमहाशब्दपालिकेतनप्रतिडक्कवराहालाञ्छनपिञ्छचकुन्तसिहासनमकरतोरणकनकदण्डगङ्गायमुनादीनि स्वकुलक्रमागतानि निक्षिप्तानीव साम्राज्यचिह्नानि समादाय कडम्बगङ्गादिभूपान्निर्जित्य सेतुनर्मदामध्यं सार्धसप्तलक्षं दक्षिणापथं पालयामास । तस्य पल्लवान्वयजातमहादेव्यां **विजयादित्यः** सुतोऽभूत् । ततः **पुलकेशी** ततः **कीर्तिवर्मा** ततः **सत्याश्रयविष्णुवर्धनौ** तयोर्ज्येष्ठः कुन्तलराजलक्ष्मीमग्रहीत् । इतरो वेङ्गीभुवं सोऽयम् । स्वस्ति श्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारितीपुत्राणां कौशिकीवरप्रसादलब्धराज्यानां मातृगणपरिपालितानां स्वामिमहासेनपादानुध्यातानां भगवन्नारायणप्रसादासादितवरवराहलाञ्छनक्षणवशीकृतारातिमण्डलानामश्वमेधावभृथस्नानपवित्रीकृतवपुषां चालुक्यानां कुलमलंकरिष्णुः **सत्याश्रयवल्लभेन्द्रस्य भ्राता** कुब्जविष्णुवर्धनोऽष्टादश वर्षाणि वेङ्गीदेशमपालयत् । तत्सुतो **जयसिंहवल्लभ**स्त्रयस्त्रिंशतं तदनुज **इन्द्रराजः** सप्त दिनानि तत्सुतो **विष्णुवर्धनो** नव वर्षाणि तत्सूनुर्**मङ्गियुवराजः** पञ्चविंशतिम् एवमविच्छिन्नचालुक्यक्षितिपालपरम्परया ।

बभूव श्रीनिधी राजा राजराजमहीपतिः ।
स्वनीत्या पालयत्युर्वीं स रत्नाकरमेखलाम् ॥

अपि च ।

कुले यदूनामजनिष्ट राजा हरिप्रभो हैहयनामधेयः ।
ततः कृतार्थीकृतबन्धुलोकः कृती कृतज्ञः कृतवीर्य आसीत् ॥

रोचिष्णुरथचक्रेण क्रान्तविश्वो यथा रविः ।
स्फुरत्करसहस्रेण कार्तवीर्यस्ततोऽजनि ॥

जीवत्युदारे सितकीर्तिमात्रकलेवरे भूयसि भूपवर्गे ।
ततस्ततोत्तुङ्गजगद्विभूतिरभीरभून्मुम्मडिभीमभूपः ॥
वल्लीव तन्वी तस्यासीच्छद्विदेवी वराङ्गना ।
तयोरग्रसुतो वेन्नभूपालोऽस्यानुजः सुखी ॥
श्रीमान्राजपड्डक्ष्मानाथः कोनमण्डलाधीशः ।
उपयेमे यः कुलजे लक्ष्मीतोण्डाभिके देव्यौ ॥
लक्ष्मीमुम्मडिभीमेशं राजेन्द्रचोडभूभुजम् ।
असूत तोण्डमाम्बा च सुतं सत्यमहीपतिम् ॥

सोऽयं **राजेन्द्रचूडभूपतिः** स्वपितामहेन श्रीमद्राजाधिराजराजेन्द्रचोडप्रसादाल्लब्धानि सिंहासनप्रतिढक्कापिञ्छकुन्तैकशङ्खाद्यखिलसाम्राज्यचिह्नानि समादाय वेङ्गीभुवो भर्ताभवत् ।

दग्ध्वा यः प्रबलप्रतापवडवासप्तार्चिषा विद्विषः
प्राप्तो विक्रमरुद्रतां निजकरस्पष्टीकृताशेषभूः ।
लोकस्वस्वसमस्तवृत्तिरगमद्यो **हैहयादित्यतां**
यातो यः खलु गण्डवेण्डड्डुवतां प्रोत्खण्डितारिश्रिया ॥
तस्याभवत्कुलस्त्रीणां विष्णोर्लक्ष्मीरिव प्रिया ।
**मैलारदेवी** महिषी योषिल्लोकविभूषणम् ॥
अस्याः सुतानां पञ्चानां ज्वलत्पञ्चाग्नितेजसाम् ।
अग्रजो **वेतभूपालो मल्लिदेव**नृपोऽनुजः ॥
**वेतभूपालका**ज्जातौ **गङ्गाश्रीबिम्बमावयोः** ।
सितकीर्ती सुतौ **मन्मचोडसूर्यक्षितीश्वरौ** ॥
निजकार्मुकनिर्मुक्तबाणनिर्मलितद्विषौ ।
सौभ्रात्रभुजवीर्याभ्यामुभौ राघवलक्ष्मणौ ॥
नृपकुलतिलको यः **कोनराजेन्द्रचोडः**
कृतसकलसुकृत्यो गण्डवेण्डड्डुवनाम्ना ।
द्विभुजमिह सह प्राकारकं कारयित्वा
शिवमलमत शैलं मण्डपं भीमनाथे ॥

तस्याग्रावरजन्मानौ जगद्विदितविक्रमौ ।
**श्रीमन्मुम्मडिभीमेशसत्याश्रयमहीपती** ॥
विभज्येमां भुवं भूयः पालयामासतुः स्वयम् ।
निजप्रतापदग्धारिमण्डलाधीशमण्डलौ ॥
तयोर्मुम्मडिभीमेशाल्लोकभूपालकोऽजनि ।
लोकालोकान्तरालानि शोभयन्निजतेजसा ॥
सत्येशाद्बलिनौ जातौ बलकृष्णसमौ नृपौ ।
श्रीमद्राजपण्डुश्रीकोनभीमक्षितीश्वरौ ॥
जातो राजपण्डोश्च पार्वतीवल्लभाद्भुवः ।
भर्ता श्रीवल्लभाधीशः क्षालयन्कलिकल्मषम् ॥
अनन्तरं पितुः श्रीमान्निजसिंहासनस्थितः ।
सोऽयं **लोकमहीपालः** पालयामास मेदिनीम् ॥
तथा **श्रीभीमभूपालः** पितुः सत्यमहीपतेः ।
राज्यलक्ष्मीं भुवा सार्धं दध्रे साक्षादिवाच्युतः ॥
धीरप्रद्वेषियोषिद्रणविरहजलापारधारास्त्यजन्ती
स्वज्योतिर्जालदृग्विभ्रमविहितमहामोहमग्नांस्तदीशान् ।
आलिङ्ग्यालिङ्ग्य कण्ठेष्वथ तदसुसमं सर्ववित्तं हरन्ती
भाति प्रौढाङ्गनेव स्वकरदृढगृहीतापि यत्खङ्गवल्ली ॥
तयोरनन्तरं क्षोणीमक्षतं परिरक्षतः ।
मल्लिदेवमहीपालवल्लभे(वे)शविशांपती ॥
यः प्रौढक्षितिपालमौलिमुकुटालंकारसिंहासनः
प्रोद्वृत्तारिपुरापरत्रिपुरहा भूधूर्धरः श्रीधरः ।
यश्चाशेषकलाकलापविभवः क्ष्माभारतीवल्लभः
संपद्भोगपुरंदरः क्षितिभृतां **श्रीमल्लिदेवाधिपः** ॥
**श्रीवल्लभ**महीपाल उण्डिकामनृपात्मजाम् ।
उपयेमेऽग्रमहिषीमचमाम्बेति विश्रुताम् ॥

तस्यामजनयत्पुत्रौ वंशवार्धिसुधाकरौ।
मन्मसत्यमहीपालपण्डुनामक्षितीश्वरौ॥

अपि च।

स्वश्रीबाहुलताधृतासिलतिकामात्रैकमित्रो युधि
श्रीहस्तस्थितवारिराशिरशनालीलाङ्गराज्यश्रियाम्।
सत्यो नित्यरतो मतिप्रणिहितप्रत्यग्रनीतिः श्रुति-
स्मृत्युत्पादितधर्मकर्मनिरतानुष्ठाननिष्ठापरः॥

चतुर्दश समाः श्रीमत्पुरुविक्रमचक्रिणि।
वल्लभक्षोणिपाले च राज्यं कृत्वा दिवं गते॥
ततस्तदात्मजः **श्रीमान्मन्मसत्यमहीपतिः**।
पितुः सिंहासनारूढः प्रौढारिवडवानलः॥
अर्थिसंदोहमन्दारः कामिनीमकरध्वजः।
प्रतिक्षत्रियनक्षत्रप्रभाविभ्रमभानुमान्॥
अक्षीणगुणमाणिक्यधीगभीरमहार्णवः।
ब्रह्माण्डमण्डनाखण्डकीर्तिधामसुधाकरः॥
समस्तभुवनाधारधीरताकाञ्चनाचलः।
अनन्तकान्तिसंतानलक्ष्मीलक्ष्मीनिकेतनः॥

सोऽयं **मल्लिदेव**क्षितिपतिर्यश्चैष वल्लभेन्द्रस्य तनयः **मन्मसत्येश्वरः**, उभौ सह संभूय गुद्दवादिविषयराष्ट्रकूटप्रमुखान्कुटुम्बिनः सर्वान्समाहूये-त्थमाज्ञापयतः। विदितमस्तु श्रीगुद्दवादिविषये ओदियूरुनामग्रामोऽस्माभिः श्रीपीठापुरीनिवासिने श्रीकुन्तीमाधवदेवाय सर्वकरपरिहारेण दत्त इति।

अपि च।

गाढारूढो निरूढोन्नतिघनधनितप्रौढविद्वेषिसाल-
स्कन्धास्कन्धान्तराणि स्फुरदसुलतिकाजिह्वया विद्धमृद्धम्।
पायं पायं तदीयात्यलघुलसदसुस्पर्शनं शोचते य-
द्बाहुर्भोगेन्द्रलीलः प्रधनभुवि कुलोत्तुङ्गपृथ्वीश्वरस्य॥

माता या जायमाम्बा सकलकुलसतीसत्तमोत्तुङ्गकीर्ति-
मूर्तीभूता गरुत्मद्ध्वजपदजलजद्वन्द्वसद्राजहंसी ।
या श्रीमन्मन्मगोङ्कक्षितिपवरविभोर्धर्मपत्नी तयोच्चैः
स्वस्याः सद्भक्तिसाक्षीकृतविमलशिला मन्दिरालंकृतायाः ॥

शकवर्षंबुलु गुर्नेदि मेषसंक्रान्तिनिमित्तमुन श्रीपिठापुरमुन श्रीकुन्ती-माधवदेवरकुगुद्दवादिलीनि ओदियूरनियेडि ऊरु गृहक्षेत्रारामसहितमु गलानखण्डमुनु श्रीमन्महामण्डलेश्वरकोनमल्लिदेवराजुनु वल्लभराजु को-ङ्कुमन्मसत्ति राजुनु हविर्बलुचर्चनार्थमु नित्यनैमित्तिकमासोत्सवसंवत्स-रोत्सवार्थमुनु गीतनृत्यवाद्यादिविविधभोगार्थमुंगानिच्चिरि अस्य ग्रामस्य सीमानः पूर्वतः वलेंगुएगुदयसीमा । आग्नेयतः वेलेगुनएनिक अलमुन भोडतातकालिय सीमा । दक्षिणतः श्रीपादमुलुपल्लि सीरिपुरमुन मय्यनि-कुट्ट वेमुगुण्डय सीमा । कोल्कुरु कु नल्लंजेवु कोम्मुन गुण्डय पट्टि वच्चि । नैर्ऋततः एनुंगुदल कोप्पल्लि पोलसुन मय्यनकुट्टन पुल्लिगुट्टय सीमा । पश्चिमतः कोप्पल्लि तुर्पुन कवलगुंट्टल सीमा । वायव्यतः चनुपकत्य वयलि केशवचंदुचेवु तुर्पुन गट्टयवु गट्टय सीमा । उत्तरतः संप्पर पोलमुन भी-मराजुचेवु दक्षिणमु गट्टय सीमा । उप्पुटे नु नक्कलकालियं गलसिन मंय्य-निकुट्टु मेरगानु वच्चि । ऐशानतः उप्पुटेटि दक्षिणमुन गट्टु वट्टि वच्चि वेलेग्गुन प्रेमुलवक्कय सीमा । ई धम्मवुनकुनेव्वरु विलंबमु सेसिरेनि वारुपञ्चमहापातकमु सेसिन पापमुनं वोदुरु गंग्गकत वेयि कविललनु वेवुरु ब्राह्मणुलनु वधिंच्चिन पापमुनं वोदुरु ।

बहुभिर्वसुंधरा दत्ता बहुभिश्चानुपालिता ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत्तु वसुंधराम् ।
षष्ठिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥

इति व्यासवचनाच्चायं धर्मः परिपालनीयः ।

शत्रुणापि कृतो धर्मः पालनीयः प्रयत्नतः ।
शत्रुरेव हि शत्रुर्न धर्मः शत्रुर्न कस्यचित् ॥

तस्मादयं धर्मः सर्वैः परिपालनीयः ।
श्रीपीठापुरमुनकंटाचार्यलिखितम् ॥

(एपिग्राफिया इण्डिका—४ । ८७-९३)

---

# (१३२)

## श्रीवेङ्कटपतिरायशासनपत्रम्[१] ।

यस्य संपर्कपुण्येन नारीरत्नमभूच्छिला ।
यदुपास्यं सुमनसां तद्वस्तुद्वन्द्वमाश्रये ॥
यस्य द्विरदवक्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति भजतां विष्वक्सेनं तमाश्रये ॥
जयति क्षीरजलधेर्जातं सव्येक्षणं हरेः ।
आलम्बनं चकोराणाममरायुष्करं महः ॥

पौत्रस्तस्य **पुरूरवा बुध**सुतस्तस्या**यु**रस्यात्मजः
संजज्ञे **नहुषो ययाति**रभवत्तस्माच्च **पूरु**स्ततः ।
तद्वंशे **भरतो** बभूव नृपतिस्तत्संततौ **शंतनु**-
स्तत्तुर्यो **विजयोऽभिमन्यु**रुदभूत्तस्मात्**परीक्षि**त्ततः ॥
**नन्द**स्तस्याष्टमोऽभूत्समजनि नवमस्तस्य राज्ञश्च**ळिक्क**-
क्ष्मापस्तत्सप्तमः **श्रीपति**रुचिरभवद्राजपूर्वो नरेन्द्रः ।

---

१. इदं शासनपत्रं ताम्रपत्रे लिखितं प्रथमं Sir Walter Elliot महाशयेन मषीचिह्नितं प्रतिकृतम्. तत्रैकं तु Dr. Burgess महाशयतः, अपरं तु Dr. Fleet महाशयतः प्राप्तम्. यद्यपि Dr. Burnell महाशयकृतसंक्षिप्तव्याख्यानसहितोऽयं लेखः प्राक् Indian Antiquary द्वितीयभागे मुद्रितः, तथापि विजयनगरराजकुलमधिकृत्य दाक्षिणात्यग्रन्थकर्तृपण्डितवरश्रीमदप्पयदीक्षितसमयनिर्णयायात्र पुनर्मुद्रितः, इति E. HULTZSCH, PH. D. महाशयाः प्रकाशकाः. (A. D. 1601)

तस्यासीद्द्विज्जलेन्द्रो दशम इह नृपो वीरहेमाळिराय-
स्तार्तीयीको मुरारौ कृतनतिरुदभूत्तस्य मायापुरीशः ॥
तत्तुर्योऽजनि तातपिन्नममहीपालो निजालोकन-
त्रस्तामित्रगणस्ततोऽजनि हरन्दुर्गाणि सप्ताहितात् ।
अह्नैकेन च सोमिदेवनृपतिस्तस्यैव जज्ञे सुतो
वीरो राघवदेवराडिति ततः श्रीपिन्नमोऽभून्नृपः ॥
आरवीटिनगरीविभोरभूदस्य बुक्कधरणीपतिः सुतः ।
येन साळुवनृसिंहराज्यमेधमानमहसा स्थिरीकृतम् ॥
स्वःकामिनीः स्वतनुकान्तिभिराक्षिपन्तीं
बुक्कावनीपतिलको बुधकल्पशाखी ।
कल्याणिनीं कमलनाभ इवाब्धिकन्यां
वल्लाम्बिकामुदवहद्बहुमान्यशीलाम् ॥
सुतेव कलशाम्बुधेः सुरभिलाशुगं माधवा-
त्कुमारमिव शंकरात्कुलमहीभृतः कन्यका ।
जयन्तममरप्रभोरपि शचीव बुक्काधिपा-
च्छुतं जगति वल्लमालभत रामराजं सुतम् ॥
सहस्रैः सप्तत्या सहितमपि यः सिन्धुजनुषां
सपादस्यानीकं समिति भुजशौर्येण महता ।
विजित्यादत्तेऽस्मादवनिगिरिदुर्गं विभुतया
विधूतेन्द्रः कासप्पो(प्प)डयमपि विद्राव्य सहसा ॥
कन्दनवोलिदुर्गमुरु कन्दळदभ्युदयो
बाहुबलेन यो बहुतरेण विजित्य हरेः ।
संनिहितस्य तस्य चरणाम्बुषु भक्ततया
ज्ञातिभिरर्पितं सुधयति स्म निषेव्य विषम् ॥
श्रीरामराजक्षितिपस्य तस्य चिन्तामणेरर्थिकदम्बकानाम् ।
लक्ष्मीरिवाम्भोरुहलोचनस्य लक्काम्बिकामुष्य महिष्यलासीत् ॥

तस्याधिकैः समभवत्तनयस्तपोभिः
　　श्रीरङ्गराजनृपतिः शशिवंशदीपः ।
आसन्समुल्लसति धामनि यस्य चित्रं
　　नेत्राणि वैरिसुदृशां च निरञ्जनानि ॥
सतीं **तिरुमलाम्बिकां** चरितलीलयारुन्धती-
　　प्रथामपि तितिक्षया वसुमतीयशो रुन्धतीम् ।
हिमांशुरिव रोहिणीं हृदयहारिणीं सद्गुणै-
　　रमोदत सधर्मिणीमयमवाप्य वीराग्रणीः ॥
रचितनयविचारं **रामराजं** च धीरं
　　**वरतिरुमलरायं वेङ्कटाद्रि**क्षितीशम् ।
अजनयत स एतानानुपूर्व्या कुमारा-
　　निह **तिरुमल**देव्यामेव राजा महौजाः ॥
सकलभुवनकण्टकानरातीन्समिति निहत्य स **रामराजवीरः** ।
भरतमनु भगीरथादिराजप्रथितयशाः प्रशशास चक्रमुर्व्याः ॥
व्यराजत श्री**वरवेङ्कटाद्रिराजः** क्षितौ [1]लक्ष्मणचारुमूर्तिः ।
ज्याघोषदूरीकृतमे[2]घनादः कुर्वन्[3]सुमित्राशयहर्षपोषम् ॥
　त्रिषु श्रीरङ्गक्ष्मापरिवृढकुमारेष्वधिरणं
　　विजित्यारिक्ष्मापांस्**तिरुमल**महाराजनृपतिः ।
　महौजाः साम्राज्ये सुमतिरभिषिक्तो निरुपमे
　　प्रशास्त्युर्वीं सर्वामपि तिसृषु मूर्तिष्विव हरिः ॥
यशस्विनामग्रसरस्य यस्य पट्टाभिषेके सति पार्थिवेन्दोः ।
दानाम्बुपूरैरभिषिच्यमाना देवीपदं भूमिरियं दधाति ॥
अनन्तरं तत्तनयः प्रतीतश्चकास्ति हस्तापजितद्युशाखी ।
श्री**वेङ्कळांबा**चिरपुण्यराशिः श्री**रङ्गरायः** श्रितभागधेयः ॥

---

१. सौमित्रिवत् लक्षणैर्वा. २. इन्द्रजित्, स्तनितं वा. ३. दशरथपत्न्याः, शोभन-मित्राणा वा.

यथाविधि महीसुरोत्तमकृताभिषेकोत्सवे
यदीयकरवारिदे कनकवृष्टिदे सर्वतः ।
यशोमयतरङ्गिणी दशदिगन्तरे जृम्भते
सतां प्रशमितोऽभवत्कृपणतोरुदावानलः ॥

विद्वत्त्राणपरायणस्तदनुजः श्रीवेङ्गळांबापुरा-
पुण्योत्कर्षफलोदयस्तिरुमलश्रीदेवरायात्मभूः ।
संतानद्रुरिव स्थितः सुरगुरौ साम्राज्यसिंहासने
सर्वां शास्ति नयेन **वेङ्कटपतिश्रीदेवरायः** क्षमाम् ॥

यथा रघुकुलोद्वहः स्वयमरुन्धतीजानिना
स्वगोत्रगुरुणा सुधीतिलकतातयार्येण यः ।
यथाविधि यशस्विना विरचिताभिषेकक्षणा-
द्विभिद्य यवनाशरान्विजयते प्रशासन्महीम् ॥

**श्रीवेङ्कटाम्बा वरराघवाम्बा पेदोपमाम्बा** च **कृष्णमाम्बा** ।
**कोडाम्बिका** देव्य इमा भजन्ते शक्तित्रयी नीतिदया यथेमम् ॥

यस्यातिप्रथितौजसो रणमुखे सेनाभटैरुद्भटैः
साटोपाहृतसैन्धवद्विपघटाशस्त्रातपत्रादिमः ।
निर्विण्णो मलिकीभरामतनुभूः संप्राप्य गेहं महै-
र्मन्दः सन्महमन्दशाहु रयते सार्थाभिधामन्वहम् ॥

यस्मिन्नङ्गदनिर्विशेषमखिलामुर्वीं भुजे बिभ्रति
प्रीताः पन्नगमण्डलाधिपकुलक्षोणीभृतो निर्भराः ।
यस्मै भूवलयैकधूर्वहकलामाशंसमानाः सदा
सेवन्ते वृषशैलतामधिगताः श्रीवेङ्कटाद्रीश्वरम् ॥

वाराशिगाम्भीर्यविशेषधुर्यश्चौरासिदुर्गैकविभाळवर्यः ।
पराष्टदिग्रायमनः प्रकामभयंकरः शार्ङ्गधरान्तरङ्गः ॥

हतरिपुरनिमेषानोकहो याचकानां
होसविरुदरगण्डो रायराहुत्तमिण्डः ।

महितचरितधन्यो मंनियान्सामुलादि-
प्रकटितबिरुदश्रीः पाटितारातिलोकः ॥
सारवीररमया समुल्लसन्नारवीदिपुरहारनायकः।
कुण्डलीश्वरमहाभुजः श्रयन्मण्डलीकधरणीवराहताम् ॥
वेङ्गत्रिभुवनीमल्लः संख्यक्षितिकलार्जुनः।
उरिगोलसुरत्राणो हरिगोचरमानसः ॥
राज्ञां वरो रणमुखरामभद्र इति श्रुतः।
वर्णितबिरुदो नाना वर्णश्रीमण्डलीकगण्ड इति ॥
आत्रेयगोत्रजानामग्रसरो भूभुजामुदारयशाः।
अतिबिरुदतुरगघट्टो मतिगुरुरारट्टमगधमान्यपदः ॥
शल्यारिनीतिशाली कल्याणपुराधिपः कलाचतुरः।
चाळिक्कचक्रवर्ती माणिक्कमहाकिरीटमहनीयः ॥
एबिरुदरायराहुतवेश्यैकभुजङ्गबिरुदमत्तश्रीः।
रम्यतरकीर्तिरोड्डियरायदिशापट्टबिरुदघोषेण ॥
औषधिपत्युपमायितगण्डस्तोषणरूपजितासमकाण्डः।
भाषेगेतप्पवरायगण्डः पोषणनिर्भरभूनवखण्डः ॥
राजाधिराजबिरुदो राजराजसमाहितिः।
मूरुरायरगण्डाङ्को मेरुलङ्घियशोभरः ॥
परदारेषु विमुखः पररायभयंकरः।
शिष्टसंरक्षणपरो दुष्टशार्दूलमर्दनः ॥
अरीभगण्डभेरुण्डो हरिभक्तिसुधानिधिः।
इत्यादिबिरुदैर्बन्दितत्या नित्यमभिष्टुतः।
जय जीवेति वादिन्या जनिताञ्जलिबन्धया ॥
काम्बोजभोजकालिङ्गकरहाटादिपार्थिवैः।
प्रतीहारपदं प्राप्तैः प्रस्तुतस्तुतिघोषणः ॥
सोऽयं नीतिजितादिभूपतितति: सुत्रामशाखी सुधी-
सार्थानां भुजतेजसा स्ववशयन्कर्णाटसिंहासनम्।

आसेतोरपि चाहिमाद्रि विमतान्संहृत्य शासन्मुदा
सर्वोर्वी प्रचकास्ति **वेङ्कटपतिश्रीदेवरायाग्रणीः** ॥
शक्तिनेत्रकळम्बेन्दु(१९२३)गणिते शकवत्सरे ।
प्लवसंवत्सरे पुण्ये मासि वैशाखनामनि ॥
पक्षे वलक्षे पुण्यर्क्षे पुण्यायां द्वादशीतिथौ ।
श्रीवेङ्कटेशपादाब्जसंनिधौ श्रेयसां निधौ ॥
श्रीमच्छ्रीवत्सगोत्राय वरापस्तम्बसूत्रिणे ।
यशस्विने यजुःशाखाध्यायिनेऽभीष्टदायिने ॥
यजनादिमषट्कर्मभजनात्पावनात्मने ।
नित्यनैमित्तिकाचारनिर्मलस्वान्तवृत्तये ॥
मृष्टान्नदानसंतुष्टशिष्टाचारद्विजन्मने ।
अष्टादशपुराणार्थहृष्टाशयसरोरुहे ॥
अवताराय वाल्मीकेरंशाय च बृहस्पतेः ।
राजन्यास्थानरत्नाय रक्षिताशेषबन्धवे ॥
**सूर्यदेवार्यभट्टस्य** पौत्रायामिततेजसे ।
**उर्पूटूरनन्तभट्ट**पुत्रायातियशस्विने ॥
**तिरुवेंगळनाथार्य**पौराणिकविपश्चिते ।
**पडवीडुमहाराज्ये** पुळुवूर्कोट्टके स्थितम् ॥
**अरुगुन्नपरन्दागि**सीमालक्ष्मीविभूषणम् ।
पेरिंतिमिरिनाडुत्थं कलवेपत्तुशोभितम् ॥
**अरुगुन्न**महाग्रामप्राचीभागमुपाश्रितम् ।
संप्रोल्लसत्कूरपाडिदक्षिणस्यां दिशि स्थितम् ॥
श्री**चातूर्सत्रवाड्यो**स्तु पश्चिमाशामुपाश्रितम् ।
**तिमिरि**ग्रामराजस्य कौबेरीं दिशमाश्रितम् ॥
**ज्वरहर्लिगसमुद्राय**प्रतिनामसमन्वितम् ।
**विळापाकाख्य**सुग्रामं शोभितं शोभनैर्गुणैः ॥

सर्वमान्यं चतुःसीमासहितं च समन्ततः ।
निधिनिक्षेपपाषाणसिद्धसाध्यजलान्वितम् ॥
अक्षिण्यागामिसंयुक्तमेकभोज्यं सभूरुहम् ।
वापीकूपतटागैश्च कच्छारामैश्च संयुतम् ॥
पुत्रपौत्रादिभिर्भोज्यं क्रमादाचन्द्रतारकम् ।
दानाधमनविक्रीतियोग्यं विनिमयोचितम् ॥
परीतः प्रयतैः स्निग्धैः पुरोहितपुरोगमैः ।
विविधैर्विबुधैः श्रौतपथिकैरधिकैर्गिरा ॥
ख्यातानुकूलगोत्राब्धिसुधांशोर्महसां प्रभोः ।
शिवादिवादिमूर्धन्यशिवशास्त्राभिमानिनः ॥
महादेवमहीदेवप्रतिष्ठानिरतस्य ह ।
**बल्लाळराय**भूपालमनोभीतिप्रदायिनः ॥
विद्वज्जनहृदम्भोजकुलाभ्युदयभास्वतः ।
**श्रीनेल्लटूरिवीरा**ख्यक्षेत्रस्थानवतः सदा ॥
**वीरप्पनायक**क्ष्मापपौत्रस्यामित्रकर्षिणः ।
**वेलूरिबोंम**नृपतेः पुत्रस्यातियशस्विनः ॥
श्रीमतो **लिङ्ग**भूपस्य विज्ञप्तिमनुपालयन् ।
श्री**वीरवेङ्कटपति**महारायमहीपतिः[1] ॥
सहिरण्यपयोधारापूर्वकं दत्तवान्मुदा ।
विद्वान्वेङ्गलभट्टाख्यो **रामया**भिधसूरिणे ॥
सभापतिवरायास्मै शिल्पिने **कामयाय** च ।
दत्तवान्भागमेकं तद्भोगाष्टकसमन्वितम् ।
शासनोल्लेखनद्रव्यनिमित्ताय द्वयोरपि ॥

---

१. 'अयं कुवलयानन्दमकरोदप्पदीक्षितः । नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥' इति कुवलयानन्दसमाप्तिलेखतो ज्ञायते कुवलयानन्दाद्यनेकग्रन्थनिर्माता अप्पदीक्षितोऽस्यैव वेङ्कटपतेराश्रित इति. तेनास्य समय एव कुवलयानन्दादिनिर्मातुरप्पदीक्षितस्य समय इति.

श्रीवेङ्कटपतिरायक्षितिपतिवर्यस्य कीर्तिधूर्यस्य ।
शासनमिदं सुधीजनकुवलयचन्द्रस्य भूमहेन्द्रस्य ॥
वेङ्कटपतिरायगिरा सरसमभाणीत्सभापतेः पौत्रः ।
कामकोटिसुतो रामकविः शासनवाङ्मयम् ॥
श्रीवेङ्कटपतिरायक्ष्मापतिदेशेन कामयाचार्यः ।
गणपयतनयः शासनमलिखदिदं वीरणानुजस्ताम्रम् ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥
स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोज्या न करग्राह्या विप्रदत्ता वसुंधरा ॥
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥

(एपिग्राफिआ इण्डिका–४।२७२–२७८)

## (१३३)

## श्रीकर्णमहाराजानां शासनपत्रम् ।

स जयति जगदुत्सवप्रवेशप्रथनपरः करपल्लवो मुरारेः ।
लसदमृतपयःकणाङ्कलक्ष्मीस्तनकलशाननलब्धसंनिवेशः ॥
जयति च गिरिजाकपोलबिम्बादधिगतपक्षविचित्रितां सभित्तिः ।
त्रिपुरविजयिनः प्रियोपरोधाद्धृतमदनाभयदानशासनेव ॥

---

१. सातारानगरप्रान्तवर्ति करहाडग्रामे कस्यचिज्जीर्णगृहस्य भूमेः खननसमये [लब्]धितान्येतानि ताम्रपत्राणि पुणेनगरस्थानन्दाश्रमाध्यक्षेण आपटे इत्युपाख्येन हरिनारा[य]णशर्मणा प्रेषितानि. तत्स्थमिद शासनम्, इति डा० रा० गो० भाण्डारक[र] महाशयाः प्रकाशका . (शकसं० ८८० A. D. 958.)

श्रीमानस्ति नभस्तलैकतिलकस्त्रैलोक्यनेत्रोत्सवो
देवो मन्मथबान्धवः कुमुदिनीनाथः सुधादीधितिः ।
निःशेषामरतर्पणार्पिततनुप्रक्षीणतालंकृते-
र्यस्यांशः शिरसा गुणप्रियतया नूनं धृतः शंभुना ॥

तस्माद्विकासनपरः कुमुदावलीनां
दोषान्धकारदलनः परिपूरिताशः ।
ज्योत्स्नाप्रवाह इव दर्शितशुद्धपक्षः
प्रावर्तत क्षितितले क्षितिपालवंशः ॥

अभवदतुलकान्तिस्तत्र मुक्तामणीनां
गण इव यदुवंशो दुग्धसिन्धूयमाने ।
अधिगतहरिनीलप्रोल्लसन्नायकश्री-
रशिथिलगुणसङ्गो भूषणं यो भुवोऽभूत् ॥

उद्वृत्तदैत्यकुलकन्दलशास्तिहेतु-
स्तत्रावतारमकरोत्पुरुषः पुराणः ।
तद्वंशजा जगति तुङ्गयशःप्रभावा-
**स्तुङ्गा** इति क्षितिभुजः प्रथिता बभूवुः ॥

क्षितितलतिलकस्तदन्वये च क्षतरिपुदन्तिघटोऽजनिष्ट **रट्टः** ।
तमनु च सुतराष्ट्रकूटनाम्ना भुवि विदितोऽजनि **राष्ट्रकूटवंशः** ॥

तस्मादरातिवनिताकुलचारुहार-
नीहारभानुरुदगादिह **दन्तिदुर्गः** ।
एकं चकार चतुरब्ध्युपकण्ठसीम
क्षेत्रं य एतदसिलाङ्गलभिन्नदुर्गः ॥

सुस्निग्धां घनपत्रसंचयकृतच्छायां मनोहारिणी-
मूढोदारफलां समाश्रितजनश्रान्तिव्यपोहक्षमाम् ।
यश्चालुक्यकुलालवालवलयादुद्धृत्य लक्ष्मीलतां
सिक्तां दन्तिमदाम्बुभिः स्थिरपदासक्तिं स्ववंशेऽकरोत् ॥

तस्मादपालयदिमां वसुधां पितृव्यः
श्रीकृष्णराजनृपतिः शरदभ्रशुभ्रैः ।
यत्कारितेश्वरगृहैर्वसुमत्यनेक-
कैलासशैलनिचितेव चिरं विभाति ॥

गोविन्दराज इति तस्य बभूव नाम्ना
सूनुः स भोगभरभङ्गुरराज्यचिन्तः ।
आत्मानुजे निरुपमे विनिवेश्य सम्य-
क्साम्राज्यमीश्वरपदं शिथिलीचकार ॥

श्वेतातपत्रत्रितयेन्दुबिम्बलोलोदयाद्रेः कलिवल्लभाख्यात् ।
ततः कृतारातिमदेभभङ्गो जातो जगत्तुङ्गमृगाधिराजः ॥

तत्सूनुरानतनृपो नृपतुङ्गदेवः
सोऽभूत्स्वसैन्यभरभङ्गुरिताहिराजः ।
यो मान्यखेटममरेन्द्रपुरोपहासि-
गीर्वाणगर्वमिव खर्वयितुं व्यधत्त ॥

चालुक्यवंशं दहता यदीयप्रतापवह्नेरभिलब्धजन्मा ।
ब्रह्माण्डभाण्डोदर·········नाद्यापि विश्रान्तिमुपैति शब्दः ॥

तस्योर्त्तर्जितगुर्जरो हृतहटल्लाटोद्भटश्रीमदो
गौडानां विनयव्रतार्पणगुरुः सामुद्रनिद्राहरः ।
द्वारस्थाङ्गकलिङ्गगाङ्गमगधैरभ्यर्चिताज्ञश्चिरं
सूनुः सूनृतवाग्भुवः परिवृढः श्रीकृष्णराजोऽभवत् ॥

अभूज्जगत्तुङ्ग इति प्रसिद्धस्तदङ्गजः स्त्रीनयनामृतांशुः ।
अलब्धराज्यः स दिवं विनिन्ये दिव्याङ्गनाप्रार्थनयेव धात्रा ॥

तन्नन्दनः क्षितिमपालयदिन्द्रराजो
यद्रूपसंभवपराभवभीरुणेव ।
मानात्पुरैव मदनेन पिनाकपाणि-
कोपाग्निना निजतनुः क्रियते स्म भस्म ॥

तस्मादमोघवर्षो रौद्रधनुर्भङ्गजनितबलमहिमा।
राम इव रामणीयकमहानिधिर्दशरथाज्जातः॥
क्षिप्रं दिवं पितुरिव प्रणयाद्गतस्य
तस्यानुजो मनुजलोकललामभूतः।
राज्यं दधे मदनसौख्यविलासकन्दो
गोविन्दराज इति विश्रुतनामधेयः॥
सोऽप्यङ्गनानयनपाशनिरुद्धबुद्धि-
रुन्मार्गसङ्गविमुखीकृतसर्वसत्त्वः।
दोषाप्रकोपविषमप्रकृतिः श्लथाङ्गः
प्रापत्क्षयं सहजतेजसि जातजाड्ये॥
सामन्तैरथ रट्टराज्यमहिमालम्बार्थमभ्यर्थितो
देवेनापि पिनाकिना हरिकुलोल्लासैषिणा प्रेरितः।
अध्यास्त प्रथमो विवेकिषु जगत्तुङ्गात्मजोऽमोघवा-
क्पीयूषाब्धिरमोघवर्षनृपतिः श्रीवीरसिंहासनम्॥
धर्मे मनुः समरकर्मणि कार्तवीर्यो
वीर्ये बलिर्जनमनोहरणे दिलीपः।
उच्चैश्चिरंतनयशांसि हरन्नपीत्थं
वृद्धेषु नम्रचरितो विनयेन योऽभूत्॥
किमिव सुकृतराशेर्वर्ण्यते तस्य चित्रं
युधि रिपुभिरशेषैर्वीक्षितो भज्यमानैः।
वियति निकटवर्ती यस्य जातः सहायः
प्रणतहरिविरिञ्चाभ्यर्चितश्चन्द्रमौलिः॥
श्रीकृष्णराजनृपतिस्तस्मात्परमेश्वरादजनि सूनुः।
यः शक्तिधरः स्वामी कुमारभावे व्यभूद्भुवने॥
....महतसहस्रभुजो भुजद्वयाकलितसमदरामेण।
.......................गुरुरपि येन सहस्रार्जुनो [विजि]तः॥

श्रीरट्टराज्यपुरवररक्षापरिखां मदेन यस्याज्ञाम् ।
विपुलां विलङ्घयन्तः स्वयमपतन्द्रोहिणोऽधस्तात् ॥
येन मधुकैटभाविव पुनरुन्मग्नौ जनोपमर्दाय ।
श्रीवल्लभेन निहतौ भुवि दन्तिगबप्पुगौ दुष्टौ ॥
रच्छामल्लविषद्रुममुदस्य निहितेन योऽकृत सनाथाम् ।
भूतार्यपुण्यतरुणा वाटीमिव गङ्गपाटीं च ॥
परिवलिताण्णिगपल्लवविपत्तिरासीन्न विस्मयस्थानम् ।
विस्फुरति यत्प्रतापे शोषितविद्वेषिगाङ्गौघे ॥
यस्य परुषेक्षिताखिलदक्षिणदिग्दुर्गविजयमाकर्ण्य ।
गलिता गुर्जरहृदयात्कालञ्जरचित्रकूटाशा ॥
अनमन्नापूर्वापरजलनिधिहिमशैलसिंहलद्वीपात् ।
यं जनकाज्ञावशमपि मण्डलिनश्चण्डदण्डभयात् ॥
स्निग्धश्यामरुचा प्रलम्बभुजया पीनायतोरस्कया
मूर्त्या कीर्तिलताहितामृतजलैर्वृत्तैश्च सत्त्वोद्भवैः ।
ज्ञात्वा यं पुरुषोत्तमं भरसहं विश्वंभराभ्युद्धृतौ
शान्ते धाम्नि लयं गतः प्रशमिनामाद्यः कृतार्थः पिता ॥
वृत्ते नृत्तसुराङ्गने सरभसं दिव्यर्षिदत्ताशिषि
श्रीकान्तस्य नितान्ततोषितहरे राज्याभिषेकोत्सवे ।
यस्याबद्धकरग्रहोद्यमभवत्कम्पानुरागोदया-
द्दिक्कन्याः स्वसमर्पणार्थमभवल्लग्नानुकूल्यप्रियाः ॥
लुप्ताः केऽपि निजास्पदाद्गुणभृतः केचित्प्रतिष्ठापिताः
केऽप्यन्योन्यविभेदतो विरलिताः केचित्तु संश्लेषिताः ।
येनाप्यूर्जितशब्दतन्त्रपतिना वर्णा इवोच्चावचां
नीता मण्डलिनो दशां सुमहतः सिद्धिं पदस्येच्छता ॥
कृत्वा दक्षिणदिग्जयोद्यतधिया चौलान्वयोन्मूलनं
तद्भूमिं निजभृत्यवर्गपरितश्चेरन्मपाण्ड्यादिकान् ।

येनोच्चैः सह सिंहलेन करदान्सन्मण्डलाधीश्वरा-
न्न्यस्तः कीर्तिलताङ्कुरप्रतिकृतिस्तम्भश्च रामेश्वरे ॥

स च परमभट्टारकश्रीमहाराजाधिराजपरमेश्वरश्रीमदमोघवर्षदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदकालवर्षदेवः पृथ्वीवल्लभश्रीमद्वल्लभनरेन्द्रदेवः कुशली सर्वानेव यथासंबध्यमानकान्राष्ट्रपतिविषयपतिग्रामकूटमहत्तरयुक्तकोपयुक्तकान्समादिशति—अस्तु वः संविदितम्। यथा शकनृपकालातीतसंवत्सरशतेष्वष्टस्वशीत्यधिकेषु कालयुक्तसंवत्सरान्तर्गतफाल्गुनबहुलत्रयोदश्यां बुधे दक्षिणादिङ्मण्डलानि भृत्येभ्यो जीवनं कर्तुं मण्डलेश्वरसर्वस्वानि प्रतिग्रहीतुं कालप्रियगण्डमार्तण्डकृष्णेश्वराद्यायतनानि निष्पादयितुं मेल्पाटीसमावासितश्रीमद्विजयकटकेन मया करहाटीयवल्कलेश्वरस्थानपतिकरञ्जखेटसंततिविनिर्गतेशानशिवाचार्यशिष्याय महातपस्विने सकलशिवसिद्धान्तपारगाय **गगनशिवाय** कार्तिक्यां संकल्पितसकलतपोधना(या)सनाच्छादननिमित्तं **करहाटविषयप्रतिबद्धकल्लिद्वादश**कान्तर्गतः **कंकें**नामा ग्रामः सवृक्षमालाकुलः सधान्यहिरण्यादेयः सदण्डदोषदशापराधः सर्वोत्पत्तिसहित आचन्द्रार्कं नमस्यो मया दत्तः। यस्य पूर्वतः **कन्हवन्ना** नदी। दक्षिणतः **पेन्डुरे**। पश्चिमतः **आढेंनामा** ग्रामः। उत्तरतः सैव कन्हवन्ना नदी। एवं चतुराघाटविशुद्धं **कंकेंसंज्ञकं** ग्रामं **गगनशिवस्य** कृषतः कर्षयतो भुञ्जतो भोजयतो वा न केनचिद्व्याघातः कार्यः। यश्च करोति स पञ्चभिरपि महापातकैः संयुक्तः स्यात्। उक्तं च—

षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः।
सर्वानेवं भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥

योस्यग्गेन लिखितमिति ॥

(एपिग्राफिआ इण्डिका—४।२८२–२८६)

## (१३४)

## बाईश्रीहरीरकारितवापीप्रशस्तिः[1] ।

नमः सृष्टिकर्त्रे ।

नमोऽपां पतये तुभ्यं सर्वजीवनरूपिणे ।
वरुणाय नमस्तुभ्यं नमः सुकृतसाक्षिणे ॥
जयति जगत्रयजननी कुण्डलिनी नामतः परा शक्तिः ।
सुरनरवन्दितचरणा वापीरूपात्मना सततम् ॥
नमामि विश्वकर्माणं सफलाभीष्टदायकम् ।
कृपातो यस्य सर्वे स्युः कर्म कर्तुं क्षमा नराः ॥

स्वस्ति । श्रीगुर्जरधरिण्यां श्रीमदहिम्मदाबादनगरे पातुसाहश्रीश्रीश्रीमहमूदविजयराज्ये राज्ञोऽन्तःपुरद्वारि सर्वाधिकारिणी बाईश्रीहरीरनाम्नी श्रीनगरादीशानदिगाश्रितहरीरपुरमध्ये चतुर्दिगायातानेकतृषातुरमनुष्यपशुपक्षिवृक्षादिचतुरशीतिलक्षजीवोपभोगाय परमेश्वरप्रीत्यर्थं संवत् १९९६ वर्षे शाके १४२१ प्रवर्तमाने पौष शुदि १३ सोमे वापीं कारयामास। यस्यामगाधामृतपानीयराशिमवलोक्य क्षीरोदधिर्निवासमकरोदिव । सा स्वेदजाण्डजोद्भिज्जजरायुजपोषणार्थमाचन्द्रार्कं स्थिरा भूयात् । तत्र व्ययीकृतद्रव्यसंख्या ३२९००० सर्व० ।

महमूदमहीपालमन्त्रिमुख्या प्रतापिनी ।
धर्मार्थिनो हरीराख्या वापीमिमामचीकरत् ॥
चतुष्पथे चरच्चारुचतुर्दिग्जनसंकुले ।
आचन्द्रार्कमियं वापी मधुरा पीयतां जनैः ॥

---

१. अयं प्रशस्तिलेखो यद्यपि Dr. Burgess महाशयकृतमसीप्रतिकृतिमाश्रित्य Mr H. B. Blochmann M. A. महाशयेन Indian Antiquary ग्रन्थे प्रकाशितो हरि वामन महाशयेनेङ्ग्लिशभाषयानूदितश्च, तथापि बहुशोऽशुद्धं दृष्ट्वा स्वयमेव मशीप्रतिकृतिं कृत्वा पुनरत्र प्रकाशितः इति Rev. J. E. Abbott प्रकाशकाः. A. D. 1499.

दुर्गाणि पुण्यानारामान्शतशश्च जलाशयान् ।
पदे पदेऽन्नसत्राणि धनिनः सन्ति शोभनाः ॥
महाधनव्ययं कृत्वा विश्वोपकृतिहेतवे ।
बाईश्रीहरीरनाम्नी वापीमिमामचीकरत् ॥

वापीनिर्माणेऽधिकारी परमेश्वराज्ञापालकमलिक श्रीविहामद । तथा गजधरवैश्य सूत्र० वीरा तथाज्ञाकर सू० देवा श्रीगिरणामहं सायाआ तथा महंवीरा ॥

(एपिग्राफिआ इण्डिका—४।२९८–२९९)

---

# (१३५)

## दीर्घसीनगरीस्थितवनपतिमहाराजकारित-नाट्यशालाप्रशस्तिः[१] ।

शक संवत् ९९७. A. D 1075.

आसीद्गङ्गान्ववायक्षितिपतितिलको **राजराजक्षितीशः**
क्ष्मापालप्रौढमौलिप्रकरमणिरुचिप्रस्फुरत्पादपीठः ।
योऽरातिक्षत्रचक्रक्रथनकरभुजापालिताशेषपृथ्वी-
चक्रश्चक्रायुधाभो दधदुरसि रमां वाचि वाचामधीशः ॥
तस्यान्वयागतमहाप्रतिहारिमुख्यः
संस्तम्भिताखिलविरोधिनराधिपौजाः ।
**गोकर्ण**सूनुरवनीसुरवंशभानु-
रात्रेयगोत्रमहितो महनीयकीर्तिः ॥
**वनपति**रिति नाम्ना तस्य गाम्भीर्यशौर्या-
खिलजगदुपकारैर्न्यग्बभूव प्रचेताः ।

---

१. अयं प्रशस्तिलेखो **गञ्जाम्**परिगणे **कलिङ्गपतम्**नामकत उत्तरस्यां दिशि मीलचतुष्टयान्तरे **दीर्घसी**पर्वतान्तिके आयतशिलायां वर्तते. ततो Dr. Hultzsch महाशयेन मसीचिह्नीकृतो दत्तः. तत्र प्राक् संस्कृतभाषा, तत आन्ध्रभाषेति G. V. Ramamûrti, Parlakimedı महाशयाः.

अधिकमभिमतात्तद्दानमालोक्य चिन्ता-
मणिरिह न विदद्रे यत्तदश्मत्वहेतोः ॥
आजावसौ **चोड**नृपस्य सेनामहावनस्याश्वमृगाकुलस्य ।
मत्तेभसारद्रुमपूर्णितस्य दावानलोऽभूच्चलमूर्तिगण्डः ॥
तेनाजौ **चोड**सेनावनदवदहनेनाशुगप्राशशस्त्री
निस्त्रिंशज्वालकेनोत्कलगजतुरगानीकिनीनाथभूजा ।
निर्दग्धा भग्नमूला निपतितशिरसश्छिन्नबाहूरुशाखा
दृश्यन्तेऽद्यापि भूतेश्चय इव धवलैरस्थिभिर्जीर्णमांसैः ॥
जित्वा मुहुर्वेङ्गिधराधिनाथं तस्याजहाराखिलवस्तुराशिम् ।
**दद्दार्णव**स्तेन यमाय दूतः प्रस्थापितो दिग्जयकीर्तनाय ॥
जित्वैवं भूमिपालान्वनपतिरवनावात्मनः कीर्तिवल्लीं
शाकाब्दे शैलपद्मप्रभवनिधियुते **दीर्घरस्यां** नगर्याम् ।
दुर्गादेव्यालयस्याभरणमिव पुरः स्थापयामास गुर्वीं
श्रीमाञ्छ्रीनाथवीर्यः स्थगितदशदिशां नाट्यशालाच्छलेन ॥
दीपमखण्डं प्रादान्मण्डलिकः सोऽतिचण्डदोर्दण्डः ।
तस्यामेव समायां तस्यै देव्यै सुरेशपूज्यायै ॥

[श्रीशकुनेण्डलु भूसतिपै शैलनन्दाब्जभवसंख्यनोन्द वेङ्गि देशंबु गिमिडियु गोसिलगिड्डि सिंगिदेशंबु म ····योड्डदेशमनङ्ग जनिनभूपालुरननिनोड्चे चलमूर्तिगण्डण्डै नेगडिन मण्डलिकुण्डु भूसुरवंशुण्डु वासवनिभभोगि वणपति सौजन्यगुणयुतुण्डु दीर्घासि भगवति देवि देवालयसुन मुंदटं गड्डुघनतरमुग मण्डपमेत्तिचे भण्डनविजयुण्डु गण्डगोपालुण्डखण्डवर्तिदीविय वेट्टेनद्देविकिनव्वेलं दन मनोवल्लभि वनजनेत्रि दीविय वेट्टें वज्रावतियुनु साक्षुलिनशशुतालगलयत्तकुनु मुदमुन गगनभूमिचन्द्रखरकरोद कशिखि मारुतात्ममूर्तिमहिषमथनि यिष्टपूर्तेफलमुलेखकालंवुनुमेच्चुतोडं दमकुनिच्चुचुणु] ॥

(एपिग्राफिआ इपिडका—४।३१५–३१७)

# (१३६)

## श्रीकाटयवेममहाराजधर्मपत्नीमल्लाम्बिकाकारित-मार्कण्डेयशिवालयाग्रहारप्रशस्तिः।

शक संवत् १३३३. A. D 1411.

विश्वंभरोऽव्याद्भूदारः केलिपल्वलिताम्बुधिः।
विश्वंभराभवत्सापि येनोद्वाहमवाप्य भूः॥
भवतां भवतां नागः शांकरिः शंकरोऽन्वहम्।
दानेन सुरभिः स्वस्य दानेन सुरभिश्च यः॥
शिरोरत्नं शंभोः शशधरकिशोरः कलयता-
दलंकारे गौर्या मुकुरति रते दीपति च यः।
बिसाङ्कुरभ्रान्त्या गगनतटिनीहंसपटली
मुहुश्चञ्चूघर्षाद्विमलविमलस्तेजित इव॥
अस्ति स्वस्तिमदाद्यमध्वरभुजामम्भोजनाभं मह-
स्तन्नाभीकमलादभूत्रिजगतां निर्माणकर्मक्षमः।
मुख्यो विश्वसृजां चिरंतनगिरां विश्रामघण्टापथ-
स्तस्यासन्मुखबाहुसक्थिपदतो वर्णाः क्रमेणोदिताः॥
पुंसस्तस्य पुरातनस्य चरणाम्भोजातजातं कुलं
स्वल्पाचारविधानतोऽपि विमलं शुद्धस्वभावादिदम्।
आसीत्किं च कलौ युगे नृपतयः प्रायेण यत्रोदिता-
स्तेजः शौर्यवदान्यताप्रभृतिभिर्युक्ता गुणैः प्राभवन्॥
तत्र पण्टकुलं नाम प्रभूतं बहुशाखिनि।
तराविव फलं रम्यवृत्तं सरसमुज्वलम्॥

---

१. एतत्प्रशस्तिलेखाश्रयताम्रपत्राणि त्रिंशद्वर्षपूर्वं गोदावरीपरिगणान्तर्गते डामलापुरम्नाम्नि वसतौ प्राचीनगृहखननकाले मोक्कपटलरजप्पनाम्ना लब्धानि. ताम्रपत्राणीदानी मद्रासविचित्रवस्तुसंग्रहशालायां वर्तन्ते इति J. Ramayya B. A., B. L., प्रकाशकाः.

तत्रासीद्वेमभूपालः कुले विबुधरञ्जकः।
पयोधाविव संतानो राजरत्नोद्भवाकरे॥

श्रीमान्वेममहीपतिः स विदधे पातालगङ्गातटे
श्रीशैले जगनोब्बगण्डबिरुदः सोपानवीथीं शुभाम्।
यासौ दीव्यति दिव्यसोमनगरारोहोद्यतानां नृणां
निश्रेणिः परिकल्पितेव नितरामा ब्रह्मकल्पस्थिरा॥

यस्मिन्निःसीमभूदानख्यातिसौभाग्यशालिनि।
द्विजैर्न बहु मन्यन्ते बलिभौवनभार्गवाः॥

अनवोतप्रभुस्तस्मादजायत भुजायतः।
महासेनो महादेवादिवारातिकुलान्तकः॥

अनवोतमहीपतौ धरित्रीं परितो बिभ्रति पन्नगेन्द्रमुख्याः।
चिरमुच्छ्वसिता लघूकृते स्वे भरणे जीवनमस्य संस्तुवन्ति॥

तस्यानुजः सुजननोऽस्ति वसन्तरायो
वीरानवेमनृपतिः क्षुरिकासहायः।
यस्मिन्महीमवति सार्थमभूच्चिराय
नामावनौ सुमनसां बहुशो वदान्ये॥

हेमाद्रिदाननिरते यस्मिन्ननवेमभूपतौ मुदितान्।
अवलोक्य भूमिदेवान्देवाः स्पृहयन्ति भूमिवासाय॥

यस्मिन्किरति वसन्ते दिशि दिशि कामोत्सवेषु कर्पूरम्।
अधिवासितपरिधानानुभवज्ञोऽभूच्चिराय गिरिशोऽपि॥

कुमारगिरिभूपोऽभूदनवोतविभोः सुतः।
जयन्तो वासवस्येव प्रद्युम्न इव शार्ङ्गिणः॥

कोण्डवीडुरिति ख्याते पुरे स्थित्वा कुलागते।
कुमारगिरिभूपोऽयं चिरं भूमिमपालयत्॥

तुला पुरुषरत्नस्य श्रीकुमारगिरेः कुतः।
तुलापुरुषमुख्यानि महादानानि योऽतनोत्॥

आसीदमात्यरत्नं **काटयवेम**प्रभुस्तस्य ।
अतिसुरगुरुभार्गवमतिरतिभार्गवविजयविजयविख्यातिः ॥

सिंहासने निधायासौ **कुमारगिरि**भूवरम् ।
अतेजयन्महातेजाः श्रीकृष्ण इव धर्मजम् ॥

**कुमारगिरि**भूनाथो यस्मै विक्रमतोषितः ।
प्रादात्प्राचीं भुवं राजमहेन्द्रनगरीमुखाम् ॥

नप्ता **काट**महीभुजो गुणगणोदारस्य **मार**प्रभोः
पौत्रः **काटयवेम**भूमिरमणः श्री**वेम**पृथ्वीपतेः ।
दौहित्रः पुनर**न्नवोत**नृपतेर्धात्रीशचूडामणे-
र्जामाता जयति क्षितिं चिरमव**न्दोड्डाम्बिका**नन्दनः ॥

**काटयवेम**कटाक्षे प्रभवति सदये च निर्दये च तथा ।
गजपतिमुखनृपतीनां चित्रं मुक्तातपत्रता भवति ॥

भूपालान्नमयन्प्रजाः नियमयन्कान्ताजनं कामय-
न्भूदेवान्नमयन्नरीन्विरमयन्मित्राणि विश्रामयन् ।
कीर्तिं स्वां भ्रमयन्नघानि शमयन्धर्मं समायामय-
न्सोऽयं **वेम**महीपतिर्विजयते **काटा**वनीशात्मजः ॥

अभूत्**काटयवेम**स्य जाया **मल्लाम्बिका** सती ।
अशेषगुणसंपूर्णा पातिव्रत्यधुरंधरा ॥

राजद्राजमहेन्द्रनामनगरे गोदावरीतीरगं
मार्कण्डेयशिवालयं पतिहिता **मल्लाम्बिका** धार्मिका ।
कृत्वा शुद्धसुवर्णरत्नखचितं ब्रह्मप्रतिष्ठास्तथा
सत्राण्यध्वनि च प्रपा विजयतेऽनेकांस्तटाकानपि ॥

श्री शाके गुणरामविश्वगणिते कार्तिक्यहेऽब्दे खरे
प्रादात्**काटयवेमयः** स्ववनितामल्लाम्बिकानामतः ।
ग्रामं मल्लवरं **नृसिंह**विदुषे काण्वद्विजायादरा-
दाचन्द्रार्कमुदर्कलालसमतिः सैश्वर्यभोगाष्टकम् ॥

कोनदेशेऽग्रहारोऽयं भाति मल्लवराधिपः।
तीरे च वृद्धगौतम्या: पुण्यो मुक्तीश्वरान्तिके॥
अप्पयार्यस्य पौत्रोऽस्य नृसिंहः काश्यपान्वयः।
अन्नदानपरो नित्यमहीबलतनूभवः॥
यथाविभागमत्राशान्विधाय ज्ञातिभि: सह।
अधीतकाण्वशाखाध्वा भुङ्क्ते धन्यो यथासुखम्॥

[ईवूरि पोलमेर सोमल्लु तूर्पुन तोत्तडिमूडि पोलमेर पुत वत्तुलमुप्पडि-तोंटमामिंड्लु मोदल्लुगा वोयि मल्लायम्मगारिकोमरगिरिपुरपु पोलमेर पुंत मोचेनु। दक्षिणानु। आकोमरगिरिपुरपु पोलमेरवुडे वृद्धगौतमि मो-चेनु। पङ्चमटनु वृद्धगौतमि। उत्तराननु। विद्यावृद्धतीर्थमनिवृद्धगौत-मिलोनि गुमि मोदल्लुगा वच्चिन तोत्तडिमूडि पोलमेर पुत वत्तुलसुप्पडितों-टमामिंड्लु मोचेंनु]

पालनसुकृतस्य चापहरणदोषस्य च प्रकाशनाय केचन पुरातनाः श्लोका लिख्यन्ते—

दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम्॥
शत्रुणापि कृतो धर्मः पालनीयः प्रयत्नतः।
शत्रुरेव हि शत्रुः स्याद्धर्मः शत्रुर्न कस्यचित्॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिवर्षसहस्राणि विष्ठाया जायते क्रिमि:॥
तटाकानां सहस्रेण चाश्वमेधशतेन च।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥

किंचैतद्दातृवचनम्—

कर्तव्यवित्काटयवेमभूपः कृताञ्जलिः प्रार्थयते नृपालान्।
एष्यान्भवद्भि: परिपालनीयो धर्मो ममायं दयया धिया वा॥

श्रीरामचन्द्रेणाप्येवमुक्तम्—

सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो भवद्भि ।
सर्वानेव भाविन पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्र ॥
कृतं श्रीवल्लभेनेद शासन सद्विकासनम् ।
कण्वगोत्रेण पुत्रेण लक्ष्मीश्रीवल्लभार्ययो ॥

श्रीवराहो रक्षतु । मङ्गलमहाश्रीश्रीश्रीजेयुन् । वेसु त्रालु ॥

(एपिग्राफिआ इण्डिका—४।३२१–३२५)

---

# (१२७)

## श्रीसुन्दरपाण्ड्यमहाराजकारितश्रीरङ्गनाथभूषणादिप्रशस्तिः[1] ।

हरि ओम् । स्वस्ति श्री—

येनासौ करुणामनीयत दशा श्रीरङ्गपद्माकर
कृत्वा त भुवनान्तरप्रणयिन कर्णाटदोषाकरम् ।
भूयोऽप्यत्र जगत्रयीबहुमता लक्ष्मीमवस्थापय-
न्देव· सुन्दरपाण्ड्यभानुरुदय लेभे प्रतापोष्मलम् ॥
दत्तैर्नैकतुलाधिरोहविधिना रङ्गेश्वरस्यालय
देव श्रीमधुरामहेन्द्रनृपतिर्जाम्बूनदैर्निर्ममे ।
अस्योत्तुङ्गभुजाद्रिभासुरयशश्चन्द्रोदयव्यञ्जिका
सध्येवानिशमीक्ष्यते नवजपारक्ता यदशुच्छटा ॥
आच्छाद्य राजतपन कनकैर्विमान
रङ्गे हरेस्तदपदानभुवा स्वनाम्ना ।
अस्थापयत्परममा प्रणवात्सुवर्णे
तस्मिन्पुमासममले मनसीव योगी ॥

---

१ इय प्रशस्ति त्रिचनापल्लिपरिगणे श्रीरङ्गमद्वीपे रङ्गनाथमन्दिरद्वितीयप्राकारस्य पूर्वभित्तौ समुपलभ्य Mr V Venkayya M A नामकेन मत्प्रथमप्रतिनिधिना प्रेषिता—इति प्रकाशका E Hultzsch Ph D महाशया ।

कोशादात्ता क्षितिपतिरवि काठकक्षोणिभर्तु-
मलिा प्रादान्मरकतमयीं शार्ङ्गिणे रङ्गधाम्ने ।
लीना तस्योरसि महति या लीलयोपेत्य पश्चा-
दालिङ्गन्त्या परिकलयते दीर्घतासाम्यमुर्व्याः ॥

देवाय रङ्गपतये नरदेव भास्वा-
नस्पर्शयन्मणिमय मुकुट महौजा' ।
यस्य त्विषा दिनमणेरिव तारकाणा
शान्ता रुचि शयनभोगिफणामणीनाम् ॥

अकृत कनकवर्मच्छादित रङ्गभर्तु
शयनमुरगराज शार्ङ्गिणो राजसूर्य ।
विलसति विहरन्त्या य समन्तेन पत्या
कवचित इव लक्ष्म्या कौङ्कुमैरङ्गरागै ॥

प्रत्यादिष्टसुमेरुशृङ्गविभव विश्वोत्तरक्ष्मापति
श्रीरङ्गे नरसिंहधाम विदधे कार्तस्वर गोपुरम् ।
यस्मिन्नक्तमुदीर्णभासुरमहस्तोमे मुहूर्तं गत
पर्यासाकृतिरेव भास्करमिव प्राप्त शशी दृश्यते ॥

घोरद्वैरथखिन्नकाठकपुरीसपत्समाकर्षिणा
देवेनेन्दुकुलोद्भवेन विदधे सर्वोत्तरक्ष्माभृता ।
विष्वक्सेनविमानमक्षतनभ संचारवेलोन्मिष-
द्रोचि सचयवञ्चितद्युमणिना हेम्नातिभूम्ना वृतम् ॥

कृतस्य नृपभास्वता रिपुकिरीटहेमोच्चयै-
रनेकमणिशोभिनो मरकतोरणस्यान्तरे ।
हरिर्विरचितासिको जयति रङ्गधामाश्रय-
स्तपात्ययपयोधर त्रिदशकार्मुकावेष्टितम् ॥

विष्णोरुद्भुजसुन्दरस्य विदधे वेश्म क्षितीन्द्रार्यमा
कोशागारविलुण्ठितै क्षितिभुजा कोटीरहेमोच्चयै ।

अद्याप्यन्तिकभूरमुष्य बहलैर्यत्तेजसामुद्गमै-
रुत्सङ्गस्थविदीर्णदैत्यरुधिरव्याप्तेव विद्योतते ॥
रङ्गेश्वराय क्षितिपालसूर्य प्रालम्बमुक्तास्रजमुन्नतश्री ।
भीतेन शक्रेण किरीटभङ्गात्सुरद्रुम दत्तमिवोपनिन्ये ॥
मूर्त यश स्वमिव सुन्दरपाण्ड्यदेवो
मुक्तामय व्यधित रङ्गपतेर्वितानम् ।
यस्य प्रभाभिरनुयाति तदीयमौलि-
र्भागीरथीपरिगत मुकुट पुरारे ॥
क्रमुकपनसमोचानालिकेराम्रमुख्यै
कनकनिचयक्लृप्तैर्नैकरूपै फलौघै ।
मुदमकृत मुरारेरेकरूपापि रङ्गे
मरकतपृथिवीभृत्सभवा भक्तिवल्ली ॥
नृपतिरविरुदार सचरन्मेरुतुङ्ग
व्यरचयदधिरङ्ग शातकुम्भ शताङ्गम् ।
तडिदभिसरणश्रीर्व्योम्नि यस्य प्रभाभि
शरदवतरणेऽपि प्राप्यते वारिवाहै ॥
सर्वोत्तीर्णमहीपतिर्मधुरिपोर्देवस्य जेता द्विषा
विस्तीर्णामतनिष्ट हाटकमयीं रङ्गे प्रपा जगमाम् ।
अष्टाना ककुभा मुखेषु युगपत्तत्कीर्तिचन्द्रोदय
विष्वग्विस्फुरितैर्मयूखविसरै सध्येव या शसति ॥
रङ्गास्पदप्रणयिन परमस्य पुसो
हैम सुपर्णमकरोत्क्षितिपालसूर्य ।
यस्याग्रजन्मन इव प्रभया स्फुरन्त्या
सपद्यते जगति शश्वदहर्मुखश्री ॥
आसञ्जयन्नृपरवि शयितस्य रङ्गे
कसद्विषो वपुषि काञ्चनमन्तरीयम् ।

यस्यांशुभिः कवचितेन हिरण्यगर्भे
भूयो निषण्णमिव नाभिगतेन धात्रा ॥
उच्चैः प्रभावलयमूर्जितकान्ति हैम
प्रादत्त रङ्गपतये नरपालसूर्य' ।
आभाति यत्तदुपकण्ठगत प्रफुल्ल-
मन्तस्तमालमिव रम्यमशोकषण्डम् ॥
नृपतपनवितीर्णामास्थितो हैमपीठीं
विविधमणिविचित्रां बिभ्रदुच्चै प्रभा च ।
जयति धृतमरुत्वत्कार्मुक रङ्गनाथ
कनकशिखरशृङ्गस्थायिन कालमेघम् ॥
चैत्रे मासि चकार राजतपनो यात्रोत्सव रङ्गिन
श्लाघ्य कान्तिमयैस्तथाद्भुतमयै सपन्मयैर्वासरै ।
नन्दन्त्येव हि ते न विस्मयपद ये बिभ्रते चेतना-
माचैतन्यभृतोऽपि यत्र दधते वृक्षा विकास परम् ॥
कर्तु रङ्गनिवासिन कमलया साक विहारोत्सव
हेम्ना सुन्दरपाण्ड्यदेवनृपतिर्नाव नवा निर्ममे ।
पद्मोचि'खचितै कवेरतनयारोधोरुहै. शाखिभि-
र्मन्दारद्रुमषण्डमण्डिततटामन्वेति मन्दाकिनीम् ॥
शौर्यानीतैर्नरपतिरवि शार्ङ्गिणो रङ्गभर्तु-
स्तस्तारोच्चै कनकनिचयैरान्तर सद्मसालम् ।
वेलाचक्र विजयजनुषा तस्तरे य स्वधाम्ना
स्कन्धावारीकृतवसुमतीसीमसालायमानम् ॥
क्लृप्त सुन्दरपाण्ड्यभूमिपतिना यद्रङ्गभर्तु पुरो
देवस्याभ्यवहारमण्डपमभूद्विस्तीर्णमायाभवत् ।
तेनैव प्रतिपादितस्य हरता पृथ्वीपतीनां धन
सौवर्णस्य परिच्छदस्य तदल नासीदवस्थापने ॥

आपादचूडमकरोन्नरपालसूर्यो
　रङ्गेशितुर्वपुषि रत्नविभूषणानि ।
यैरस्य वक्षसि निविष्टपदापि पद्मा
　रत्नाकर भवति भूय इव प्रविष्टा ॥
धर्मद्विष समिति सुन्दरपाण्ड्यदेवे
　निर्मथ्य पालयति विश्वमधिज्यचापे ।
विष्णोर्विभूषणमभूदमुना वितीर्णं
　रङ्गालयस्य तपनीयमय तनुत्रम् ॥
इच्छा सुन्दरपाण्ड्य उन्नतिमतीं बिभ्रत्स्वया सञ्ज्ञया
　निष्पाद्याभ्यवहारवारयुगल निष्कम्पसपत्तिकम् ।
सपूर्णं विदधे गभीरमुदर रङ्गेशितु शार्ङ्गिणो
　यस्याभूद्भुवनैश्चतुर्दशभिरप्यापूरण दुर्लभम् ॥
आतन्वतान्वहमनेकतुलाधिरोह
　रङ्गेन्द्रधाम्नि नरदेवदिवाकरेण ।
हेम्नामसशयमभक्ष्यत मेरुरर्थे
　तत्केतुलक्षणमधास्यत चेन्न मीनम् ॥
मही मह पति प्रतिनरेन्द्रलोकादिव
　प्रतापरविमण्डलान्यपहृतानि दोर्विक्रमै ।
सुवर्णपरिकल्पितान्यतिमहान्ति पात्राण्यदा-
　त्कवेरगिरिकन्यकापुलिनशायिने शार्ङ्गिणे ॥
सर्वानप्रणतान्निपात्य नृपतीन्सिहासनेभ्यो हठा-
　त्तैर्निर्माय समाहृतैर्मन इव स्व प्राशु सिहासनम् ।
भूभृद्भानुरदत्त रङ्गपतये यत्प्राप्य लक्ष्मीसख
　सोऽय मेरुतटीजुष सतडितो मेघस्य धत्ते श्रियम् ॥
हेमाच्छादनराज इत्यधिगतप्रख्यातनाम्नो हरे-
　र्हैमस्योरगसूदनस्य शयनागारस्य चाधिश्रिय ।

त्रीणि स्वर्णमयानि राजतपनश्चक्रे विमानानि यै
श्रीरङ्ग स इवाभिषेकनिभृतैरुद्भासते मौलिभि ॥

(एपिग्राफिआ इण्डिका—३।११–१४)

---

# (१३८)

## अनन्तवर्ममहाराजकारिततडाकप्रतिष्ठाप्रशस्तिः[1] ।

ओम् ।

स्वस्त्यमरपुरानुकारिण सर्वर्तुसुखरमणीयाद्विजयवत कलिङ्गनगरवासकान्महेन्द्राचलामलशिखरप्रतिष्ठितस्य सचराचरगुरो सकलभुवननिर्माणैकसूत्रधारस्य शशाङ्कचूडामणेर्भगवतो गोकर्णस्वामिनश्चरणयुगलप्रणामाद्विगतकलिकलङ्कोऽनेकाहवसक्षोभजनितजयशब्द प्रतापावनतसमस्तसामन्तचक्रचूडामणिप्रभामञ्जरीपुञ्जरञ्जितनिजनिस्त्रिंशधारोपार्जितवरचरण सितकुमुदकुन्देन्दुयशा ध्वस्तारातिकुलाचलो नयविनयदयादाक्षिण्यशौर्यौदार्यसत्यत्यागादिगुणसपदाधारभूतो परममाहेश्वरो मातापितृपादानुध्यातो गङ्गामलकुलतिलको महाराजश्रीराजेन्द्रवर्मसूनु श्रीअनन्तवर्मदेव कुशली तिरिकट्टुविषये मेदेलाकग्रामनिवासिन कुटुम्बिन समाज्ञापयति—विदितमस्तु भवताम्—'ग्रामोऽय होम्बरबलवास्तव्यवाजसनेयकौशिकगोत्रविष्णुदेवसूनुश्रीधरभट्टाय वेदवेदाङ्गतत्त्वज्ञाय तटाकप्रतिष्ठायामुदकपूर्वक कृत्वा सूर्यग्रहोपरागे दत्त । अत्र सीमालिङ्गानि कथ्यन्ते—पूर्वस्या दिशि वनराजिकापाषाण, आग्नेय्या पाषाण, दक्षिणस्या चठेरनदी, नैर्ऋत्या तेन्तलिवृक्षपङ्क्ति' वनराजिका, पश्चिमस्या गुरातटाक. पाषाण, वायव्या कल्ज्ञातटाक' पाषाण, वारुण्या (कौवेर्या) गर्त, ऐशान्या वटवृक्ष वनराजिका त्रिकूट ।

---

१ इय प्रशस्ति विजगापट्टम्परिगणे शृङ्गवरपुकोटनिकटस्थस्य आल्मण्डाग्रामस्य सनिधौ प्राप्य Mr W A Willock I. C S महाशयेन प्रेषितेषु त्रिषु ताम्रपत्रेषु लिखिता वर्तते—इति प्रकाशका E Hultzsch Ph D महाशया

अत्र व्यासगीतानि भवन्ति—

बहुभिर्वसुधा भुक्ता राजभि सगरादिभि ।
यस्य यस्य यदा भूमी[1] तस्य तस्य तदा फलम् ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
से विष्टाया[2] क्रुमिर्भूत्वा पितृभि सह पच्यते ॥

लिखित दुर्गप्परहस्येण(?) उत्कीर्णमक्षशालिना ॥ गाङ्गेयवशप्रवर्धमानविजयराज्यसवत्सरशतानि त्रीणि चतुरोत्तराणि ॥

(एपिग्राफिआ इण्डिका ३।१८–२०)

---

## (१३९)

## श्रीवीरबुक्कमहाराजभ्रातृजश्रीसंगममहाराजानां शासनपत्रम्[3] ।

हरेर्लीलावराहस्य दष्ट्रादण्ड स पातु व ।
हेमाद्रिकलशा यत्र धात्री छत्रश्रिय दधौ ॥

अस्ति प्रस्तूयमानप्रबलनिजभुजाखर्वगर्वानुरोधि-
स्वाधीनोदारसारस्थगितरिपुनृपोद्दामसग्रामशक्ति ।
राजा राजन्यकोटिप्रणतिपरिलुठन्मौलिमाणिक्यरोची-
राजीनीराज्यमानस्फुरदुरुचरणाम्भोरुह **संगमेन्द्रः** ॥

तस्मादुदभवन्पञ्च तनया शौर्यशालिन ।
कल्पावनिरुहा पूर्व कलशाम्बुनिधेरिव ॥

---

१ भूमीशब्दे 'कृदिकारात्–' इति डीष सभवेन साधुत्वसभवेऽपि तदजानाना प्रकाशकवरा E Hultzsch Ph D महाशयास्तु 'भूमिस्तस्य' इति पाठ कल्पयन्ति स्म २ 'स्वविष्टाया' आदर्शे । 'श्वविष्टाया' प्रकाशकशोधित ३ इद शासनपत्र Mr R Sewell महाशयेन सूचित Dr C D Macleane महाशयेन Dr Hultzsch महाशयनिकटे प्रेषितम् उक्तमहाशयेन मन्निकटे प्रेषितम्—इति प्रकाशका H Krishna Sastri महाशया

आदौ हरिहरक्ष्माभृदथ कम्पमहीपति ।
ततो बुक्कमहीपाल. पश्चान्मारप-भूदपौ ॥
तत्र राजा हरिहरो धरणीमसिचच्चिरम् ।
सुत्रामसदृशो येन सुरत्राण पराजित ॥
तस्यानुजश्चिरमशाद्धात्री कम्पणभूपति' ।
याथार्थ्यमभजन्नाम यस्य कम्पयितुर्द्विषाम् ॥
जयन्तयिव जम्भारे प्रद्युम्नयिव शार्ङ्गिण ।
तनय समभूद्वीरस्तस्य संगमभूधर ॥
यस्य दृष्टिमुदयद्दयारसामर्थिनामभिमतानुबन्धिनीम् ।
हन्त नूनमनुयान्ति सस्पृह कर्णकल्पतरुकामधेनव ॥
यद्भुजाश्रयणजातकौतुका नापर जयरमाभिवृण्वती ।
सयुगानि समुपेयुषी चिरादासिधारमनुतिष्ठति व्रतम् ॥
यद्यश प्रसरणेन भूयसा ह्लादमीयुषि पर जगत्त्रये ।
अश्नुते विफलता न चन्द्रमा केवल कुमुदिनीविकासनात् ॥
श्रीमान्प्राक्प्रत्यगब्धिद्वितयपरिवृढ सैष भाषातिलङ्घि-
क्षुद्रक्ष्माभृद्भुजङ्ग प्रतिभटधरणीपालसेनाविबाळ (?) ।
माद्यन्नागाश्वमर्त्याधिपतिगजघटापञ्चवक्त्रोऽभियाती-
त्युद्धुष्यन्ते यदीया स्फुटमिह बिरुदा. सतत बन्दिवृन्दै. ॥
इत्थ सर्वगुणोपरञ्जनकलामीदृग्विधामेयुष-
स्तस्य क्षोणिवतेरपारयशसस्तत्त्वोपदेशक्रियाम् ।
कर्तुं कामपि वासनामुपनयन्कारुण्यवारानिधिः
श्रीमान्सनिधिमादधत्पशुपति श्रीकण्ठनाथात्मना ॥
माहेश्वराणा तत्त्वाना मान्ये यस्मिन्प्रदर्शके ।
प्राचामदर्शि नाथाना प्रायेण नवता भुवि ॥
यत्पादानतिमात्रेण यतीना मुक्तिरन्तिके ।
क्रियते तपसा किं तु केवल कायशोषणम् ॥

कैवल्यपदवीद्वारकवाटोद्घाटकर्मणि ।
कटाक्षा कुञ्चिका यस्य काङ्क्षता तत्र निर्वृतिम् ॥
स कदाचित्प्रियं शिष्य संगमेन्द्रमुपस्थितम् ।
न्यदिशद्देशिको दृष्ट्या निर्भरप्रेमगर्भया ॥
अग्रहार कमप्यत्र त्वया दापयितु मम ।
प्रीतिरस्ति तत कश्चिद्ग्रामो राजन्प्रदीयताम् ॥
इति तस्य गुरोराज्ञामीशिता धरणीभृताम् ।
अग्रहीदञ्जलि ग्रथ्नन्नवनम्रेण मौलिना ॥
पाकाख्यो विषयोऽस्त्यपारमहिमा प्राच पयोधेस्तटे
तस्मिन्विक्रमसिंहमित्यपि पुर धत्ते ललामश्रियम् ।
तस्याप्युत्तरतस्त्रियोजनमिताद्देशात्स्फुरत्युज्ज्वलो
ग्रामो विट्टरकुंटमित्यमुमदाद्राजा गुरो' प्रीतये ॥
शाकाब्दे नागशैलद्युमणि(१२७८)परिमिते दुर्मुखाब्दे तृतीये
मासि श्रीसंगमेन्द्रो गुरुहितनिरत, सगमे चन्द्रभान्वो ।
प्रादात्प्रत्यब्दकाले निजपितुरमरत्वाप्तये विद्रगुण्ड-
ग्रामं त्रिंशन्मिताभ्य, श्रुतिपथनिरताभ्यो महीदेवताभ्य ॥
विद्रगुण्डमितीह प्रथितापरनामशालिनस्तस्य ।
प्रकटयति स यमीन्द्र[ ] प्राय श्रीकण्ठपुरमिति प्रख्याम् ॥
आ पूसलपाडभुवोऽप्पा मल्लेकुण्डसंज्ञिकासारात् ।
आ पापटपुटसविधादा वा लवणप्रभूतिकुल्याया ॥
इति प्राग्दक्षिणप्रत्यगुदीचीना दिशा क्रमात् ।
अस्याग्रहाररत्नस्य सीमासधिः प्रदर्शित ॥
देशोऽभून्मुलिकिप्रथामधिगतस्तत्रास्ति पुष्पाचलो
नाम स्थानमनुत्तम पुररिपोस्तस्योत्तरस्या दिशि ।
पेन्नाया स्फुट उत्तरत्र च तटे सिंकेसरीति श्रुत
ग्राम पूर्वमदापयन्नुपकराद्ग्रामोपहार गुरु ॥

आ सिन्धोर्वर्केराख्याया आ च जम्पूशिलोच्चयात्।
आ वादरनदीकूलादा च केतनिकुण्टतः॥
अस्य ग्रामस्य चतसृष्वाशास्विति किल क्रमात्।
सीमासधिरभिज्ञेयः सीमाभिर्गुणसपदाम्॥
तत्रैको हरितान्ववायजनुषेऽनन्ताय भागस्ततो
वाध्र्यश्वान्वयजन्मने द्विजनुषे द्वौ पेद्दिभट्टाय च।
भारद्वाजकुलोद्भवाय तदनु द्वावेल्लयाख्याजुषे
हारीताय च वल्लभाय मुनये दत्तस्तथैकः पुनः॥
कौण्डिन्याय च बोमयाय विदुषे भागस्तथैकस्ततः
कौण्डिन्याय तु माधवाय धरणीदेवाय चैकस्तथा।
भागः कूचयभूसुराय कृतिने श्रीवत्सगोत्राय च
श्रीवत्सान्वयसभवाय च तथा श्रीरुद्रयाख्याभृते॥
भूयः कौशिकवशलब्धजनुषेऽनन्ताय भागः श्रुत-
श्चैकः काश्यपगोत्रक्लृप्तजनुषे भागः कुमाराय च।
भागः कौशिकवशजाय च तथा श्रीमश्चयाख्याभृते
कोऽप्यन्यः कपिगोत्रजाय महते श्रीदेवयायेतरः॥
अन्यः कश्चिदहोभ(ब)लाय च भरद्वाजान्वयोद्भूतये
श्रीवत्सान्वयजन्मनेऽपि च परः श्रीमल्लयार्याय च।
भारद्वाजकुलोद्भवाय तु पुनः श्रीराघवायेतरो
दत्तो ह्यन्यतमस्तु कौशिकजनुर्भाजे नृसिहाय च॥
भागः काश्यपवशभद्रजनुषे श्रीपेद्दयार्याय च
श्रीमद्गौतमवशशेखररुचे श्रीपिन्नयाख्याय च।
कौण्डिन्यान्वयमल्लयाथ च भरद्वाजान्वयश्रेयसे
सभूताय च विट्ठलाय पुनरित्येकैकमेवार्पितः॥
दत्तो विश्रुतकाश्यपान्वयभुवे श्रीतिप्पयार्याय त-
द्गोत्रोद्भूतिजुषे तथाप्यल्लुरिति ख्याताय वीताहसे।

नागाख्याय च धीमते गुरुभरद्वाजाभिजन्मस्पृशे
वाधूलाय च सर्वनाम वहते भागोऽयमेकैकश· ॥
श्रीशालावतवंशजाय नृहरिप्रख्याय दत्ता पुन
शाण्डिल्याय च भूसुराधिपतये श्रीगिर्यभिख्याजुषे ।
श्रीकण्ठाय च काश्यपान्वयभुवे कौण्डिन्यगोत्रश्रिते
लक्ष्मीदेवविपश्चिते तदितरे भागास्तथैकैकश ॥
सद्वृत्तोदारमुक्तामयभरितवपुर्नित्यसौगुण्यगण्य-
क्षेत्रालकारभूत शमितकटुमनस्तापवह्निप्रकाश ।
आद्यो वर्ण प्रसिद्धिं श्रयति खलु यत शाश्वतावासरम्य
स श्रीकण्ठाग्रहार· स्फुरतु विगलितत्रासमाचन्द्रवासम् ॥
इति भोगनाथ[1]सुधिया [2]संगमभूपालनर्मसचिवेन ।
श्रीकण्ठपुरसमृद्धौ शासनपत्रेषु विलिखिता श्लोका ॥
सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो महद्भि ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्र ॥
एकैव भगिनी लोके विप्रदत्ता वसुधरा ।
न भोग्या न करग्राह्या विप्रदत्ता वसुधरा ॥
स्वदत्ता परदत्ता वा यो हरेत वसुंधराम् ।
षष्टिर्वर्षसहस्राणि विष्ठाया जायते क्रिमि ॥

---

१ अय **सायण-माधव**योर्भ्राता प्रतीयते, तथा च **पराशरमाधवीये**—
'**श्रीमती** जननी यस्य सुकीर्तिर्**मायणः** पिता ।
**सायणो भोगनाथश्च** मनोबुद्धी सहोदरौ ॥
**बौधायनं** यस्य सूत्र शाखा यस्य च याजुषी ।
**भारद्वाजं** कुल यस्य सर्वज्ञ स हि **माधव**· ॥' इत्युपलभ्यते

२ अस्यैव **संगम**महाराजस्य राज्यसमये **माधवीयधातुवृत्ति**र्माधवसहोदरसायणेन विरचिता अतएव—'**कम्प**राजसुत**सगम**महाराजमन्त्रिणा **मायण**पुत्रेण **माधव**सहोदरेण **सायणेन** विरचिताया माधवीयधातुवृत्तौ' इति प्रतिगणसमासौ समुपलभ्यते

स्वदत्ताद्द्विगुण पुण्य परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्त निष्फल भवेत् ॥
न विष विषमित्याहुर्ब्रह्मस्वो विषमुच्यते ।
विषमेकाकिन हन्ति ब्रह्मस्व' पुत्रपौत्रकम् ॥
एवं विज्ञाय यो राजा पालयेत्पृथिवीसुरान् ।
साम्राज्यलक्ष्मीसंपन्न स भूमौ सुखमेधते ॥

॥ श्रीविरूपाक्ष ॥

श्रीकण्ठपुरसपूर्त्यै श्रीविरूपाक्षसज्ञया ।
लिखित संगमेन्द्रेण पत्रे पञ्चाक्षरो मनुः ॥
श्रीकण्ठनाथ ॥ मङ्गलमहा० श्री श्री श्री श्री श्री ॥

(एपिग्राफिआ इण्डिका—३।२४-३२

---

## (१४०)

## श्रीवीरबुक्कमहाराजप्रपौत्रवीरविजयमहाराजपुत्र-श्रीदेवरायमहाराजानां[१] शासनपत्रम् ।

भूयस्यै भवता भूत्यै भूयादाश्चर्यकुञ्जर ।
विहारविपिन यस्य विदुर्वेदान्पुराविद' ॥
क्षेम व प्रचुरीकुर्यात्क्षोणीमभ्युद्वहन्नयम् ।
क्रोडाकृतेरभूद्यस्य क्रीडापल्वलमम्बुधि' ॥
अस्ति क्षीरार्णवोद्भूतमपापुष्पमनुत्तमम् ।
अम्लान यदनिर्माल्यमाधत्ते शिरसीश्वर ॥
सदामोदनिधेस्तस्य सतानो यदुसंज्ञया ।
अभूदाश्चर्यमाधुर्यं वसुधायास्तप फलम् ॥

---

१ 'इद शासनपत्र विल्लूरपरिगणे सत्यमङ्गलम्ग्रामे अरुणाचलसंनिधौ गर्तस्थितं Mr H. Le Fanu I C S महाशयेन गृहीत्वा मत्पार्श्वे प्रेषितम्' इति Dr E Hultzsch Ph D महाशया प्रकाशका

संगमो नाम राजासीत्सारभूते तदन्वये ।
प्रजाना य समस्ताना प्रमोदो मूर्तिमानिव ॥
सर्वरत्ननिधेस्तस्य सम्राडासीत्तनूभुवाम् ।
मध्ये बुक्कमहीपालो गणीनामिव कौस्तुभ· ॥
अहीनभोगससक्तिरसौ राजशिखामणि ।
गोप्ता हरिहरं गौर्या कुमारमुदपादयत् ॥
य· षोडशमहादानमहामण्डपकर्मणा ।
भवन कृतवान्सर्व भुवन कीर्तियोषित ॥
तस्य मल्लाम्बिकाजानेरुदभूदुन्नतो गुणैः ।
प्रतापदेवरायाख्य पुत्र सुत्रामविक्रम ॥
कर्णतालानिलैर्यस्य करिणा समराङ्गणे ।
तुलुष्कास्तुरगारूढास्तूलानामभजन्दशाम् ॥
हेमाम्बिकाया तस्यासीत्तनयो विनयोन्नत ।
विद्यानिधिर्विशेषज्ञो वीरो विजयभूपति ॥
प्रतापकीर्तिलतयो प्रभोर्यस्य समिद्धयो ।
पुष्पाणि तडितस्ताराः पुष्पवन्तौ च तौ फले ॥
दयानिधेरभूत्तस्य देवी नारायणाम्बिका ।
शौरेरिव महालक्ष्मी शकरस्येव पार्वती ॥
पुत्ररूप तयो· श्लाघ्य पूर्वजन्मतप फलम् ।
देवरायमहीपालो दाता विजयते भुवि ॥
कलिकालानलज्वालाजालग्लपितकन्दल ।
दाताम्बुधारया यस्य भ्रियते धर्मपादप· ॥
यस्य प्रतापतपने यशश्चन्द्रे च जाग्रति ।
सदैव कमलोल्लासः सदा कुवलयोत्सवः ॥
कृते पृथुरभूद्रामस्त्रेताया द्वापरेऽर्जुन· ।
विभाति यः कलौ धीर· क्षितावेकधनुर्धर· ॥

सौन्दर्यसारे कदर्प सर्वानन्दे सुधाकरम् ।
क्रीडारसेषु य कृष्ण कीर्तयन्ति कवीश्वरा ॥
राजाधिराजस्तेजस्वी यो राजपरमेश्वर ।
भाषातिलङ्घिभूपालभुजङ्गबिरुदोज्ज्वल ॥
मूरुरायरगण्डाङ्क' पराजयभयकर ।
हिन्दुरायसुरत्राणो बन्दिवर्गेण वर्ण्यते ॥
प्रतापदेवरायेण प्रख्यातेनानुजन्मना ।
महेन्द्रस्येव यस्य श्रीरुपेन्द्रेण प्रकाशते ॥
श्रीतुङ्गभद्रापरिखे नगरे विजयाह्वये ।
पित्र्य सिंहासन प्राप्य सागरान्ता महीमवन् ॥
पुण्यश्लोकाग्रणी श्रीमान्देवरायमहीपति ।
तुङ्गभद्रानदीतीरे श्रीविरूपाक्षसंनिधौ ॥
तत्त्वलोके (१३४६) शकस्याब्दे क्रोधिसवत्सरे शुभे ।
आषाढामातिथौ पुण्ये सोमवारविराजिते ॥

मरकतनगरप्रान्ते—

आन्द्नाडाह्वये देशे चिटेयाख्यूरुसज्ञकम् ।
ग्राम त नामधेयेन कृत्वालकृतमात्मनः ॥
निधिनिक्षेपवार्यश्मसिद्धसाध्यादिसयुतम् ।
अखण्ड सीमभिर्जुष्ट निरुपाधिकमञ्चितम् ॥
आचन्द्रतारक धारापूर्वक दक्षिणान्वितम् ।
अग्रहारममुं प्रादाद्भूसुरेभ्य प्रतापवान् ॥
दत्तोऽयमग्रजन्मभ्यो देवरायमहीभुजा ।
आचन्द्रतारक भूमावग्रहारः सुमेधसाम् ॥

अस्य वृत्तिभाजोऽग्रजन्मान. कथ्यन्ते—

भारद्वाजकुलोत्तस कृष्णदेवस्य नन्दन. ।
ऋक्शाखापारगः श्रीमाञ्शिङ्गपार्यो गुणोन्नतः ॥

प्राज्ञो नरहरिः श्रीमान्नागपो विट्ठपः सुधीः।
संकणार्यो नरप[ति]सूरिर्वल्लभकोविद ॥
शिङ्गपार्यस्य तनया सहजा विनयोन्नता।
भारद्वाजो नरहरिर्विरूपाक्षस्य नन्दन ॥
ऋक्शाखापारदृश्वानो भारद्वाजकुलोद्वहा।
एकैकवृत्तिभाजोऽस्मिन्नित्यमष्टौ द्विजोत्तमा ॥
अष्टावस्याग्रहारस्य वृत्तय परिकल्पिता॰।
प्राच्यादिदिक्षु सीमान कथ्यन्ते देशभाषया ॥
[ . ..... ]

आभि॰ सीमाभिरास हरिहयमहिमा दत्तवानग्रहार
विप्रेभ्यो वेदविद्भ्यो विमलतरयशा देवरायक्षितीन्द्र॰।
आलोकालोकशैलादखिलधरणिभृन्मस्तकन्यस्तपाद
प्रीत्या पृथ्वी समस्तामवतु चिरमिमा दिक्षु दीव्यत्प्रताप ॥

एकैव भगिनी लोके सर्वेषामेव भूभुजाम्।
न भोज्या न करग्राह्या विप्रदत्ता वसुंधरा ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात्स्वर्गमवाप्नोति पालनादच्युत पदम् ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम्।
षष्टिर्वर्षसहस्राणि विष्टाया जायते क्रिमि॰ ॥

सामान्योऽयं धर्मसेतुर्नृपाणा काले काले पालनीयो महद्भि॰।
सर्वानेतान्भाविन॰ पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्र ॥
श्री श्री श्री श्री श्री ॥ श्रीविरूपाक्ष ॥

(एपिग्राफिआ इण्डिका—३।३७–३९)

---

# (१४१)

## श्रीमाधववर्ममहाराजानां शासनपत्रम् ।

ओं स्वस्ति ।

इन्दोर्धौतमृणालतन्तुभिरिव श्लिष्टै. करै कोमलै-
बेंद्धाहेररुणै स्फुरत्फणमणेर्दिग्धप्रभासोंऽशुभि. ।
पार्वत्याः सकचग्रहव्यतिकरव्यावृत्तबन्धश्लथा
गङ्गाम्भ'प्लुतिभिन्नभसकणिका. शम्भोर्जटा पान्तु व ॥
श्रीमानुच्चैर्नभस्तो गुरुरचलपते क्षोभजिच्च क्षमाया
गम्भीरस्तोयराशेरथ दिवसकराद्भास्वदालोककारी ।
ह्लादी सर्वस्य चेन्दोस्त्रिभुवनभवनप्रेरकश्चापि वायो
राजेन्द्र' स्थाणुमूर्तिर्जयति कलिमलक्षालनो माधवेन्द्रः ॥
प्रांशुर्महेभकरपीवरचारुबाहु
कृष्णाश्मसचयविभेदविशालवक्षाः ।
राजीवकोमलदलायतलोचनान्त.
ख्यात कलिङ्गजनतासु पुलिन्दसेनः ॥
तेनेत्थ गुणिनापि सत्त्वमहता नेष्ट भुवो मण्डल
शक्तो य' परिपालनाय जगत' को नाम स स्यादिति ।
प्रत्यादिष्टविभूत्सवेन भगवानाराधित' शाश्वत-
स्तच्चित्तानुगुण विधित्सुरदिशद्वाञ्छा स्वयभूरपि ॥
स शिलाशकलोद्भेदे तेनाप्यालोक्य धीमता ।
परिकल्पितसद्वश. प्रभु' शैलोद्भवः कृत. ॥

---

१. इद शासन येषु ताम्रपत्रेषु सलिखित वर्तते तानि ताम्रपत्राणि मद्रासप्रान्ते गजामपरिगणे गम्सूराधिकारे बागुदाग्रामे एकस्मिन्क्षेत्रे मृद्भाण्डनिहितानि भूमिगर्तस्थानि समुपलब्धानि Mr E C Johnson, I C S, (Collector, Ganjam) महाशयेन Dr Hultzsch महाशयपार्श्वे प्रेषितानि सांप्रत Government Central Museum, Madras, स्थाने वर्तन्ते इति सशोधका E. Kielhorn, Ph. D, C. I. E. महाशया'

शैलोद्भवस्य कुलजो **रणभीत** आसी-
द्येनासकृत्कृतभिया द्विषदङ्गनानाम् ।
ज्योत्स्नाप्रबोधसमये स्वधियैव सार्ध-
माकम्पितो नयनपक्ष्मजलेषु चन्द्र ॥

तस्याभवद्विबुधपालसमस्य सूनु
श्रीसैन्यभीत इति भूमिपतिर्गरीयान् ।
य प्राप्य नैकशतवैरिघटाविघट्टि-
लब्धप्रसादविजय मुमुदे धरित्री ॥

तस्यापि वंशेऽथ यथार्थनामा जातो **यशोभीत** इति क्षितीश ।
येन प्ररूढोऽपि शुभैश्चरित्रैर्मृष्ट कलङ्क कलिदर्पणस्य ॥

जात' स तस्य तनय' सुकृती समस्त-
सीमन्तिनीनयनषट्पदपुण्डरीक ।
**श्रीसैन्यभीत** इति भूमिपतिर्महेभ-
कुम्भस्थलीदलनदुर्ललितासिधार ॥

जातेन येन कमलाकरवत्स्वगोत्र-
मुन्मीलितं दिनकृतेव महोदयेन ।
सक्षिप्तमण्डलरुचश्च गता प्रणाश-
माशु द्विषो ग्रहगणा इव यस्य दीप्त्या ॥

कालेयैर्भूतधात्रीपतिभिरुपचितानेकपापावतारै-
र्नीता येषा कथापि प्रलयमभिमता कीर्तिपालैरजस्रम् ।
यज्ञैस्तैरश्वमेधप्रभृतिभिरमरा लम्भिता तृप्तिमूर्वी-
मुद्दृप्तारातिपक्षक्षयकृतिपटुना श्रीनिवासेन येन ॥

कैङ्गोदकृतनिकेतः शरन्निशाकरमरीचिसितकीर्तिः ।
स **श्रीमाधववर्मा** रिपुमानविघट्टन कुशली ॥

**गुड्डविषये** श्रीसामन्तमहासामन्तमहाराजराजानकराजपुत्रदण्डनायका-
न्तरङ्गकुमारामात्योपरिकतदायुक्तकविषयपतिवैश्वासिकपत्तलकादीन्ब्राह्मणपू-

ज्ञानपदानन्याश्च वर्तमानभविष्यतो व्यवहारिण' साधारणान्यथार्हं दतेत्यो-
(बोध्यो)पदर्शयति । विदितमस्तु भवतामेतद्विषयसबन्धखदिरपाट्टके
(रू)पिणो ग्राम. स्वपित्रोरात्मनश्च पुण्याभिवृद्धये सूर्यग्रहोपरागे तैत्तिरीयच-
गाय हारितगोत्राय त्र्यार्षेयाङ्गिरसाम्बरीषयौवनाश्वेति युवनाश्ववदम्बरी-
षदङ्गिरस्वत् वामणस्य नप्त्रे आदित्यदेवस्य सूनवे भट्टवामणाय सलिल-
रापुर सर अकरीकृत्य प्रतिपादितस्तदेषामाचन्द्रार्ककालमुपभुञ्जानाना
र्मगौरवान्न केनचिद्विघाते वर्तितव्यम् । अपि च ।

विद्युद्विलासतरलामवगम्य सम्य-
ग्लोकस्थिति यशसि सक्तमनोभिरुच्चै. ।
नित्य परोपकृतिमात्ररतैर्भवद्भि
र्द्धर्माभिराधनपरैरनुमोदितव्यम् ॥

उक्त च मानवे धर्मे—

बहुभिर्वसुधा दत्ता राजभिः सगरादिभि. ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
स विष्ठाया कृमिर्भूत्वा पितृभि' सह पच्यते ॥
मा भूदफलशङ्का व परदत्तेऽपि पार्थिवा ।
स्वदानात्फलमानन्त्य परदत्तानुपालने ॥
षष्टिं वर्षसहस्राणि स्वर्गे मोदति भूमिद ।
आक्षेप्ता चानुमन्ता च तान्येव नरके वसेत् ॥
लिखितोपेन्द्रसिंहोऽत्र तनय कुण्डभोगिन ।
लाञ्छित जयसिहेन उत्कीर्ण दङ्गिभोगिना ॥
सम्यगाराधितस्वामिप्रसादः श्रेष्ठदूतक ।
गङ्गभद्रो ' '' प्रातिहार्ये व्यवस्थित ॥

(एपिग्राफिआ इण्डिका—३।४३–४६)

# (१४२)

## धारानगराधीश्वरजयसिंहमहाराजानां शासनम् ।

ॐ

जयति व्योमकेशोऽसौ य सर्गाय बिभर्ति ताम् ।
ऐन्दवीं शिरसा लेखा जगद्बीजाङ्कुराकृतिम् ॥
तन्वन्तु व स्मराराते: कल्याणमनिशं जटा ।
कल्पान्तसमयोद्दामतडिद्वलयपिङ्गला ॥

परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवाक(क्प)तिराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसिन्धुराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीभोजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीजयसिंहदेव' कुशली ॥ पूर्णपथकमण्डले मक्तुलाग्रामद्विचत्वारिंशदन्त पातिभीमग्रामे समुपगतान्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिनिवासिपट्टकिलजनपदादींश्च समादिशति—अस्तु वः संविदितम् । यथा—श्रीमद्धारावस्थितैरस्माभि. स्नात्वा चराचरगुरु भगवन्तं भवानीपति समभ्यर्च्य ससारस्यासारता दृष्ट्वा

वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोग. ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणा
धर्मः सखा परमहो परलोकयाने ॥

---

१ इद शासन ययोस्ताम्रपत्रयोर्लिखित वर्तते ते ताम्रपत्रे नर्मदानिकटस्थे मान्धातान्तरीपे नीमारपरिगणे समुपलब्धे Mr Consens (Superintendent of the Archæological Survey of Western India) महाशयेन यत्नाधिक्येन प्रतिबिम्बीकृते Dr Hultzsch महाशयेन मम समीपे प्रैषि इति सशोधकवरा Dr F Kielhorn, Ph D, C I E महाशया..

अमत्तसारचक्राग्रधाराधारामिमा श्रियम् ।
प्राप्य ये न ददुस्तेषा पश्चात्ताप पर फलम् ॥

इति जगतो विनश्वर स्वरूपमाकलय्योपरिलिखितग्रामोऽय स्वसीमातृणगोचरयूतिपर्यन्तः सहिरण्यभागभोग सोपरिकर. सर्वादायसमेतश्च श्रीअमरेश्वरे पट्टशालाब्राह्मणेभ्यो भोजनादिनिमित्त मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धयेऽदृष्टफलमङ्गीकृत्य चन्द्रार्कार्णवक्षितिसमकाल यावत्परया भक्त्या शासनेनोदकपूर्व प्रतिपादित इति मत्वा तन्निवासिपट्टकिलजनपदैर्यथादीयमानभागभोगकरहिरण्यादिक देवब्राह्मणभुक्तिवर्जमाज्ञाश्रवणविधेयैर्भूत्वा सर्वमेभ्य समुपनेतव्यम् । सामान्य चैतत्पुण्यफलं बुद्ध्वास्मद्वशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मदायोऽयमनुमन्तव्य पालनीयश्च । उक्त च—

'बहुभिर्वसुधा भुक्ता राजभि. सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीहदत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तिप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
अस्मत्कुलक्रममुदारमुदाहरद्भि-
रन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दान फल परयशःपरिपालन च ॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्र ।
सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो भवद्भि. ॥'
इति कमलदलाम्बुबिन्दुलोला श्रियमनुचिन्त्य मनुष्यजीवित च ।
सकलमिदमुदाहृत च बुद्ध्वा नहि पुरुषै. परकीर्तयो विलोप्या. ॥

इति सवत् १११२ आषाढवदि १३ । स्वयमाज्ञा । मङ्गल महाश्रीः । स्वहस्तोऽय श्रीजयसिंहदेवस्य ॥

(एपिग्राफिआ इण्डिका—३।४८–५०)

# (१४३)

## श्रीअन्नवेमभूपतेः शासनपत्त्रम्[१]।

अविघ्नमस्तु।

अव्याद्विभु किरिवपुर्भुवमुद्धरन्य
शेषस्फटामणिसहस्रगतस्वबिम्ब.।
सुव्यक्तमाश्रितजनाय तदादरेण
स्वीय विभाति कथयन्निव सर्वगत्वम्॥
शम्भोर्हेरिफणारत्नै कर्तुं हार समुत्सुक।
तानि स्पृशन्पितुर्वक्र पश्यन्पातु गजानन.॥
सा चन्द्ररेखा जयति श्रीकण्ठस्य जटास्थिता।
या धत्ते पार्वतीभालफलकश्रियमुज्ज्वलाम्॥
विष्णोर्नाभिसरोजाताज्जात सरसिजासन।
तदाज्ञया जगत्सर्वं ससर्ज सचराचरम्॥
यत्र चतुर्थो वर्ण शौरे. पदपद्मसंभवो जयति।
यस्य सहजा स्रवन्ती त्रिभिः प्रवाहै पुनाति भुवनानि॥
तस्मिन्नभूदिन्दुरिवाम्बुराशौ प्रोलक्षितीशो जगदेकपाल.।
कलानिधेर्यस्य निजावतार सतर्पणायैव सदा बुधानाम्॥
तस्य पुण्योदयाज्जात सुपुत्र प्रोलभूपतेः।
वेमावनीश्वरो नाम पुण्यश्लोको नृपाग्रणी॥
यस्मिन्नृपे शासति धर्मशीले महोत्सवान्प्राप्य महीवधूटी।
स्वीय हरिश्चन्द्रनृपालमुख्यैर्वियोगदु.ख सहसा मुमोच॥

---

१ इद शासन येषु ताम्रपत्रेषु लिखितमस्ति तानि ताम्रपत्राणि गोदावरीनिकटे अमलापुरमूपरिगणे वनमल्लीग्रामे एकस्या जीर्णकल्पभूमौ खनकेनोपलब्धानि Mr P V S. Gopalam महाशयेन ज्ञात्वा Archæological survey, Madras सज्ञकस्याधिकारिणे निवेदितानि स्वामिना Vissapragad Krishnayya महाशयेन मद्रासस्वामिने समर्पितानि साप्रत मद्रासप्रदर्शिन्या वर्तन्ते इति सशोधका Dr E Hultzsch, Ph D महाशया. २ 'हेरि' भवेत्

हेमाद्रिदानान्यकरोदशेषाण्यभुङ्क्त भूमिं द्विजभुक्तशेषाम्।
यः सततीं सप्त चकार तस्य किं वर्ण्यते वेमविभोश्चरित्रम्॥

सोपानानि विधाय वेमनृपतिः पातालगङ्गापथे
स्तम्भत्वं निजधर्मशासनविधेः श्रीशैलमेवानयत्।
आस्थाने सुरसिद्धसंयमिगणैरासेव्यमानः सदा
वक्रैस्तत्पुरुषादिभिः कवयते देवो यदीयं यशः॥

आसीदप्रतिमप्रतापमहिमा हेमाद्रिदानव्रती
वीरश्रीपतिर**न्नवोत**नृपतिर्वेमक्षितीशात्मजः।
बाहाखङ्गवशादशाद्वसुमतीमेकातपत्रश्रियं
यश्चक्रे च यशःप्रवाहनिवहैस्त्रैलोक्यमेकार्णवम्॥

जित्वा महीं जिष्णुरिव स्वशक्त्या दत्त्वाग्रहारान्धरणीसुतेभ्यः।
कृत्वा कृतार्थं निजबन्धुवर्गं जनेः फलं प्राप स भूमिपालः॥

तस्यानुजन्मा **जगनोब्बगण्डः** कीर्तिप्रियो भूपतिर**न्नवेमः**।
वृत्तिर्यदीया भुवि मात्रिकाभूद्धर्मार्थकामाचरणोद्यतानाम्॥

श्री**कौडवीटी**पुरिराजधान्यां सिंहासनस्थे सति यत्र राज्ञि।
महोग्रसिंहासनवन्महीध्रान्व्रजन्ति सेर्ष्या इव वैरिभूपाः॥

यत्खङ्गफलके च्छाया स्फुरन्त्यतिविनिर्मला।
अनन्तक्षोणिपालानां भाग्यरेखा इवाहृताः॥

तेना**न्नवेम**क्षितिपेन दानक्षात्रैकतानेन महोन्नतेन।
चतुर्दिगन्ता धरणी कृतासीदपारिजाता च सपारिजाता॥

खड्गो जिष्णुः शुचिः कालः क्रव्यात्पाशी प्रभञ्जनः।
श्रीदो भीमोऽन्नवेमस्य धत्ते दिक्पालडम्बरम्॥

केचिद्देशाधिपत्यं कतिचन शिबिकाचामरच्छत्रशोभां
केचिद्राज्यं स्वकीयं कतिचन विभवैरग्रहारानुदारान्।
विन्दन्ते लोकरक्षाविधिमहितमहाभागधेयेऽ**न्नवेम**-
क्षोणीपाले सभायां सकलगुणनिधौ रत्नसिंहासनस्थे॥

क्षुरिकाकलिवेताल' कर्पूरवसन्तरायबिरुदाङ्क ।
नि'सीमभूमिदान श्रीनिधिरनवेमभूपतिर्जयति ॥

**अन्नवेम**प्रभोर्लक्ष्मीर्विबुधाना विभूतये ।
तस्यैव कीर्तये जाता तेषामपि सरस्वती ॥

शाकाब्दे गगनाभ्रविश्व(१३७०)गणिते सिद्धार्थिसवत्सरे
माघे कृष्णचतुर्दशी शिवतिथौ वीरा**न्नवेम**प्रभु ।
प्रादा**दिमडिलंक**सञ्ज्ञमतुल कृत्वाग्रहारोत्तम
ग्राम लोहितगोत्रजाय विदुषे श्री**इम्मडीन्द्राय** स ॥

नीतो मन्त्रीश्वरो विद्यागोष्ठीषु विबुधाग्रणी ।
मित्र हितोपदेशेषु भूभुजा**मिम्मडी**श्वर ॥

स **इम्मडीन्द्रः** सकलार्थवेदी मानाधिको **मल्लयम**न्त्रिसूनु' ।
लब्ध्वाग्रहार लसदन्तरात्मा प्रादात्तदर्ध धरणीसुरेभ्य ॥

वीराध्यापकमहित गौतमकन्याप्रवाहपरिवीतम् ।
भाति बहुसस्यशोभितमिम्मडिलकान्नवेमपुरमनघम् ॥

अथ सीमानिर्णय.—

क्रिद्देवीपश्चिमश्वत्था प्राच्या यामे तु दिङ्मुखे ।
प्रख्याग्रा मागणाश्वत्थभुग्गुल्लसदवेश्मनो. ॥

ऋज्वी या माध्यमा च्छाया प्रतीच्या दिशि गौतमी ।
उदीच्यामपि कौडूरीकौड्डेपूडीवटान्तरम् ।
सीमा इम्मडिलकस्य ग्रामस्य परिकीर्तिता. ॥

अथ पुराणवचनानि—

दानपालनयोर्मध्ये पालन परम यशः ।
दानात्स्वर्गमवाप्नोति पालनादच्युत पदम् ॥

स्वदत्ताद्द्विगुण पुण्य परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्तं निष्फल भवेत् ॥

न विष विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्व पुत्रपौत्रकम् ॥

रामचन्द्रेण उदीरित च—

सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो भवद्भि· ।
सर्वानेवभाविन पार्थिवेन्द्रान्भूयोभूयो याचते रामचन्द्रः ॥
श्रीमत्त्रिलोचनार्यः सुकवि· कविवशदीपको जयति ।
अनवेमनृपतिदत्तस्येम्मडिलङ्कस्य शासन कृतवान् ॥
महानटजटाछटानटदमन्दमन्दाकिनी-
कलक्वणितकङ्कणव्रजविजृम्भिवाग्गुम्फन ।
कवि· कविकुलोद्भवो भुवनभव्यदिव्योदय
शिवागमविशारदो जयति शारदावल्लभ· ॥
श्रीमत्त्रिपुरान्तक· । अनवेमु व्राळु ॥

(एपिग्राफिआ इण्डिका—३।६०–६३)

---

## (१४४)

## श्रीजायचमूपतिकारितगणपतीश्वरप्रतिष्ठाशासनम्[१] ।

श्रीकान्त श्रियमातनोतु भवता क्रोडाकृतिर्वारिधे-
रज्ञात्वाशु समुद्धृता लघुतयोद्धर्तुं क्षितिं दंष्ट्रया ।
यस्तावद्ववृधे निपीडिततनुर्ब्रह्माण्डखण्डे भृश
स्वस्थानस्थितियाचनोचितपदैस्तुष्टाव यावन्न सा ॥

---

१ इद च शासन **किष्टनापरिगणे मसुलीपट्टम्** वान्दरतालुकामध्ये **टलगडा-देवीनिकटे गणपेश्वरम्**ग्रामे **दुर्गाम्बामन्दिर**समुखे वर्तमानस्य पाषाणस्तम्भस्य त्रिषु पश्चिमदक्षिणपूर्वभागेषूल्लिखितम् एतस्य समाप्तेरनन्तर पूर्वभागे उत्तरभागे चापराणि चत्वारि स्वल्पशासनानि समुल्लिखितानि इद शासन Mr G Mackenzie महाशयेन Manual of the Kistna District पुस्तके २१४ पृष्ठे Mr R Sewell महाशयेन च List of Antiquities ग्रन्थे प्रथमभागे ५४ पृष्ठे प्रकाशितम् इति E Hultsch महाशया प्रकाशकवरा· शकसवत् ११५३ (1232 A D) समयस्तु व्यक्त एव

जयति शिरसि शंभोरिन्दुलेखा मयूखै-
रमृतविसरसारैः क्षालयन्ती जगन्ति ।
शिशिरविशदगङ्गावारिभृज्जूटभास्व-
त्कनककलशलग्ना राजतीव प्रणाली ॥
गजास्यः पातु वो यस्य भान्ति दानान्तिकालिनः ।
महाद्रिनिर्झरोपान्तकान्तनीलोपला इव ॥
अस्त्यूर्जितं काकतिवंशजानां नरेश्वराणां कुलराजधानी ।
अन्ध्रावनीमण्डनमन्मकोण्डनामाभिरामं नगरं धरित्र्याम् ॥
तत्र स्थितः प्रोलधराधिनाथः स्वबाहुवीर्येण धरां ररक्ष ।
यस्य प्रतापज्वलने समन्ताच्छत्रुक्षितीशाः शलभा बभूवुः ॥
केचिन्मन्तनगुं[ड]वत्क्षितिभृतः खड्गेन निष्खण्डिताः
केचित्तैलपदेववद्गजहयं युद्धाजिरे त्याजिताः ।
केचिद्दूरमपोहिताः समरतो गोविन्ददण्डेशव-
त्केचित्स्वस्वपदेषु येन निहिताश्चोडोदयक्ष्मेशवत् ॥
तस्मात्प्रोलनरेशान्मुप्पलदेव्यां बभूवतुः पुत्रौ ।
रिपुनृपमदेभसिंहौ [रु]द्रमहादेवभूप[ती] ख्यातौ ॥
पितुः परोक्षे वसुधां शशास रुद्रक्षमाभृद्भुवनैकवीरः ।
यस्य प्रतापोल्बणदाववह्निः प्रत्यर्थिपृथ्वीशवनं ददाह ॥
उन्मृष्टानि पुराणि येन कथयन्त्यापूर्य तत्तज्जनै-
स्तत्तन्नामभिरोरुगल्लुनगरे निर्मापिता वाटिकाः ।
किंच स्वेषु कृतेषु तेष्वथ पुरेष्वापूर्य नूत्नैर्जनैः
श्रीरुद्रेश्वरसञ्ज्ञया विरचिताः प्रख्यातदेवालयाः ॥
पोषणैस्तोषणैर्दण्डैः पालनैरुपलालनैः ।
संवर्धिताः प्रजा येन पित्रेव धरणीभृता ॥
दिवं गते रुद्रनृपे बभार भुवं महादेवविभुर्विनेशुः ।
प्रतापभानावु[दि]ते यदीये तेजांसि भानाविव भूपतीनाम् ॥

तस्मान्महादेवमहामहीशाद्व्याम्बिकायामभवत्प्रभावान् ।
सर्वसहासर्वधुरीणपाणि कुलप्रदीपो गणपत्यधीश ॥
यस्योन्मत्तगजेन्द्रगण्डविगलद्दानाम्बुवृष्टिप्लुते
त्वङ्गत्तुङ्गतुरङ्गनिष्ठुरखुरै कृष्टे तथानेकधा ।
युत्क्षेत्रे रिपुहस्तिमस्तकगलन्मुक्तौघ[बी]जाकृते
जाताः कीर्तिलताः शशाङ्कविशदा वेल्लन्ति दिग्भित्तिषु ॥
निज[भु]जविजिताना निर्जिताना परैर्वा
शरणमुपगताना सोमसूर्यान्वयानाम् ।
निखिलनरपतीनामाश्रय. सन्सदा य.
प्रतिदिनपरिवृद्धप्राज्यराज्यो विभाति ॥
अस्य भृत्य. प्रियो भाति गणपत्यवनीभृत. ।
श्रीमज्जायचमूनाथ. कथ्यतेऽय तदन्वयः ॥
विक्रान्तिमानय्यकुले प्रसिद्धे प्रादुर्बभूवात्र कलौ स भीमः ।
दु शासनः शासित एव शत्रुर्दुर्योधनोऽयोधि सुखेन येन ॥
भुवोऽवतसे वेलनाण्डुदेशे क्रोय्यूरुसज्ञं कुलसन्निवासम् ।
ग्राम स भीमो धनदोपमानश्चकार वित्तैरलकोपमानम् ॥
रच्याम्बिकाया प्रबभूवुरस्मात्ते जिल्लनारायणसूरयाख्या ।
शक्तिप्रभेदैरिव यैस्त्रिभिश्च जिगाय शत्रून्भुवि चोडिभूपः ॥
जिल्लः समुल्लासितबाहुवीर्यः कन्नारदेवं समरे विजित्य ।
लेभे निजेशाच्छिबिकातपत्राद्यशेषचिह्नैर्ध्वजिनीपतित्वम् ॥
तस्यानुज. सततमेव भर्तुर्नारायणः कार्यपरायणोऽभूत् ।
यश्चोडिभूपस्य रिपूनशेषाश्चकार भृत्यान्नयविक्रमाभ्याम् ॥
य कृष्णवेणीलवणाब्धिसङ्गे द्वीप पुरैतद्धनदेन सृष्टम् ।
परैर्दुराप वसता मनोज्ञं चकार दुर्गं प्रभुणा नियुक्तः ॥
पूर्णाभ्यर्णतटाकवाप्लुतलसच्छालीक्षुकेदारक
नानापुष्पफलाभिशोभितमहारामाभिरामस्थलम् ।

सौधाट्टालकहर्म्यगोपुरबृहत्प्राकारभास्वत्पुर
द्वीप भूपनिवासयोग्यमकरोद्य प्रागसेव्य नृणाम् ॥
**चोडसमुद्र**तटाक **चोडेश्वरधाम** चात्र हि द्वीपे ।
यश्चक्रे पतिनाम्ना **भीमेश्वरमन्दिरं** च पितृनाम्ना ॥
अत्रैव प्रासादान्विष्णोश्च करालभैरवस्यापि ।
यश्चाकरोन्मनोज्ञान्बण्डुलदेव्या महाकाल्या. ॥
अथ **वङ्लकुळ**नामग्रामे यश्चाकरोत्पितुर्नाम्ना ।
**भीमसमुद्र**तटाक **भीमेश्वर**नाम रम्यशिवभवनम् ॥
**नारायणाय** तस्मै पौरुषपरितोषित पति प्रादात् ।
द्वीपस्याधिपतित्व स्वामित्व चापि **गोण्ड्ड**पल्लीनाम् ॥
अर्थार्जकमतिशूर ज्ञात्वा देशाधिकारधौरेयम् ।
चक्रे सेनाधिपमपि **नारायण**मेव चोडिनरनाथ. ॥
तस्माज्जाता' ख्यातनारायणाख्यान्**नाराम्बा**या सूनवो भानुभास ।
**चोडिर्भीमः पिन्न चोडिर्य**शस्वी नाम्ना **ब्रम्म**श्चेति चत्वार एते ॥
अपामधीशा इव वाडवाश्रया प्रभोरुपाया इव कार्यसाधका ।
करा इवाश्लिष्टरमा मुरद्विषो विभान्ति चत्वार इमे भटोत्तमाः ॥
चोडपृथ्वीशभूपस्य च[तु]राशाजयावहा ।
अभूवन्बाहुवीर्येण चत्वारो भटपुगवा ॥
विष्णो श्रीरिव गीरिवाम्बुजभुव शभोरिवाद्रे सुता
कामस्येव रति. शचीव सुरपस्योषेव शोचिष्पते. ।
शीताशोरिव रोहिणी गुणनिधे. श्री**पिन्न**[चो]डिप्रभो-
**र्दामाम्बा** कुलपालिका समभवद्धौरर्थिना कामधुक् ॥
**नाराम्बा पेरमाम्बा** च सुते जाते तयोरुभे ।
पुत्रास्त्रयोऽभवन्पृथ्व**जायनारायणा**ह्वया ॥
भ्रातृषु त्रिषु तेष्वेष मध्यमोऽप्युत्तमो गुणै' ।
राजते **जाय**सैन्येश. पाण्डवेष्विव मध्यम. ॥

कालेऽस्मिन्नृपशेखरो गणपतिक्षोणीपतिर्लीलया
जित्वा चोलकलिङ्गसेवणबृहत्कर्णाटलाटाधिपान् ।
रक्षन्दक्षिणसिन्धुविन्ध्यनगयोर्मध्यक्ष्मामण्डल
सद्वीप वेलनाण्डुदेशमखिल स्वायत्तमेवाकरोत् ॥

स्त्रीरत्नपुरत्नगजाश्वरत्ननानाशिलारत्नचय समन्तात् ।
आहृत्य चास्माद्वेलनाण्डुदेशात्प्रावेशयत्स्व पुरमेव भूपः ॥

अथ रूपविलासविभ्रमैरसमाने भुवनत्रयेऽप्यमू ।
गणपत्यवनीपतिर्व्यधाद्दयिते नारमपेरमाह्वये ॥

तदनुजमतिसौम्याकारमाकारलक्ष्यै
सुविनयनयदाक्ष्यस्थैर्यगाम्भीर्यशौर्यै. ।
शिशुमपि गरिमाण प्रापित जायनाख्य
नरपतिरभिनन्द्य स्वानुचर्ये न्ययुङ्क्त ॥

तत॰ प्रसन्नश्चरितैर्मुदास्मै प्रादात्क्षितीश खलु जायनाय ।
आन्दोलिकाछत्रसनाथचिह्न सेनाधिपत्य गजसाधनित्वम् ॥

सुरेश्वरेणेव निजेश्वरेण सेनाधिपत्याधिकृतो विभाति ।
जायः कुमारो विबुधै परीत॰ सप्राप्तशक्ति. परवीरहन्ता ॥

यस्यासिधारा प्रबलाहिताना देवाङ्गनासङ्गमनैकदूती ।
यन्नीतिरन्यक्षितिपाललक्ष्मीसधानदूती निजवल्लभस्य ॥

शत्रूनशेषान्समरेषु शूरान्गिलिष्यत खड्गमु[ख]स्य यस्य ।
यो वैरिगोधूमघरट्टनाम्ना व्यराजत प्राक्ववल स जात. ॥

क्षीणत्व प्रतिपक्षमेति नितरामेको द्विजाधीश्वर
प्राय. क्षीणवसु प्रयाति वसुमत्पार्श्वे सदैको बुध. ।
मूढ. सन्कतिचिद्दिनान्यनुदयो ह्येक कविर्वर्तते
मद्दान किमितीव य श्रुतिगताद्दानस्तवाल्लज्जते ॥

सपदितैर्यथावत्सुतकृतिनिधिवनविवाहसुरगेहैः ।
सतटाकैर्य. सप्तभिरेतै. संतानवान्भवति ॥

सोऽय जायचमूपतिर्गणपतिक्षोणीशनाम्ना स्वय
सद्भक्त्या गणपेश्वराह्वयमहादेवस्य लिङ्गाकृते ।
द्वीपेऽस्मिन्स्वपितामहेन रचिते नारायणेनोन्नत
प्रासादान्निरमापयद्ध्रुवममु कैलासशैलोपमम् ॥
गुणशरभवमितशाके खरवर्षे माधवे सिते गौर्या ।
तिथ्या व्यधात्प्रतिष्ठा जायः श्रीगणपतीश्वरस्यास्य ॥

दिवि गणपतीश्वरश्रीमहादेवरकु पदिनेनिमिदि विषयमुल उभय नाना देसियु नगेगडडनिच्चिन आयमु कलमुन बद्द चिन्नमु ॥ गणपतिदेवमहाराजुलकु बुण्यमुगानु जायपनायकुड्डु पेट्टिन वृत्तुल्लु । एनुब ꠸ तनु पुट्लु ३। पेद्दमद्दालिनि पुट्लु ३ । कु꠸द्दालिनि पुट्लु २ । अयनपूण्डिनि पुट्लु २ । नेन्तलकोड्डूरनु पुट्लु २ । मूनिकोंडनु पुट्लु २ । चीकुलपल्लिनि पुट्लु २ । कौडिप꠸तनु पुट्लु २ । पच्चुब꠸ पुट्लु २ । चेवेड्डुन पुट्लु २ । दोनेपूडिनि पुट्लु ४ । कारमूरनु पुट्लु २ । ओडपागुल पेट्टिन पोलमु । कौतेपल्लिनि पुट्लु २ । त्रेंकटि पुट्लु २ । जायपनायकुण्ड्डु अखण्डदीपमुनकुं वेट्टिन मोदाल्लु २९ ॥

(एपिग्राफिआ इण्डिका—३।८४-८९)

---

## (१४९)

## श्रीबेतमहाराजमहिषीगणपाम्बादत्ताग्रहारप्रशस्तिः ।

इष्टार्थप्राप्तिसतुष्टै प्रणुत नाकिना गणै. ।
आर्यं विघ्नतमः सूर्यं गणेश भजतानिशम् ॥

---

१ अस्याश्च प्रशस्तेर्लेख किसनापरिगणे गन्दूरप्रान्ते येनमदलग्रामे एकस्मिन्स्तम्भे उत्कीर्णोऽस्ति तत्समयो यद्यपि लेखेनैव स्फुटस्तथापि गणपतिमहाराजसत्ता शक सवत् ११५३ प्रभृति ११७२ पर्यन्तमासीत्, अतश्च तत्सनिधाने एव तत्पुत्र्या गणपाम्बिकाया अपि भवेदित्यनुमीयते, अतोऽय लेख ख्रिस्तत्रयोदशशताब्द्यामुत्कीर्णो भवेदिति सभाव्यते स चाय लेख पूर्व Colonel Colin Mackenzie महाशयवरसग्रहत Mr Gordon Mackenzie महाशयवरेण गृहीत्वा म्यान्युअल आफ् दी किसना डिष्ट्रिक्ट् नाम्नि पुस्तके मुद्रापित इति E Hultzsch, Ph D महाशयवरा .

क्रीडाक्रोडाकृतेर्विष्णोर्दंष्ट्रादण्डो जयत्यसौ ।
धात्री हेमाद्रिकलशा यत्र च्छत्रानुकारिणी ॥
स्वस्ति श्रीकाकतीशाना वशो जगति विश्रुतः ।
यत्र जाता धरित्रीशा क्षोणीरक्षासु शिक्षिता ॥
तत्रासीत्प्रथितोरुविक्रमचण **प्रोल**क्षितीशाग्रणी
क्षात्रै शत्रुकुलान्तक परिपरैः सन्नीतिशास्त्रोज्ज्वलः ।
यस्याद्यापि विशालविश्रुततरक्रूरप्रतापोज्ज्वल-
ज्योति.खण्ड इव प्रचण्डकिरण. खेलत्ययं खे रवि. ॥
जातो **माधव**भूपतिर्गुणगिरिस्तस्मान्महीवल्लभा-
द्य सुस्वा सुमहाहवे गजवधूकुम्भद्वयस्योपरि ।
प्रख्याताप्सरस' स्तनद्वयतटे प्राबोधि योधाग्रणी-
र्लोके ख्यातविशालनिर्मलयशा वीरश्रियामाश्रयः ॥
संजातस्तस्य पुत्रस्त्रिभुवनतिलको विक्रमाद्वैतवादी
दृप्यद्राजन्यचूडामणिमकुटतटीनर्तिताज्ञाप्रचण्ड ।
बुद्धेर्विश्रामभूमि**र्गणपति**नृपति पार्वतीशप्रसाद-
प्राप्तप्रख्यातसंपज्जितभुवनरमारक्षिताशेषलोकः ॥
यत्कीर्तेः सकला दिश परिजनाः क्रीडासरास्यर्णवाः
मेरु केलिमहीधर प्रविलसल्लीलावन नन्दनम् ।
तत्तारापतिबिम्बमेव मुकुर हर्म्यं च रोदोन्तर
सोऽय **श्रीगणप**क्षितीशतिलक. क्षोणीभृतामग्रणी. ॥
क्षीराम्भोधिनिभात्तस्माद्भूपाद्गाम्भीर्यसंभृतात् ।
**गणपाम्बा** समुद्भूता साक्षाल्लक्ष्मीरिवापरा ॥
नीतिः सा विनुता विवेकविभवोद्भूति' श्रियामुन्नतिः
सत्पूजाभिरति समग्रविनय. शंभौ च भक्तिः परा ।
एतस्या गणपाम्बिकानिजतनौ पुण्या वरेण्या गुणा.
सर्वे किं सहजा जयन्ति किमु वा संकेतभाजो भृशम् ॥

श्रीधान्याङ्कपुराधीश केतराज इति श्रुतः।
अखण्डमण्डलाधीशो राजासीद्राजशेखर ॥
कोन्नातवाडीविषयाधिनाथ श्रीकेतराज क्षपितारिवर्ग'।
धर्म यदीय प्रथित त्रिलोक्यामद्यापि सर्वे गणशो गृणन्ति ॥
वेर्णार्या दक्षिणे भागे येन धर्मस्वरूपिणा।
महाग्रहारतिलका सप्ततिर्विप्रसात्कृता ॥
आसीत्तस्यात्मजो राजा रुद्रराज इति श्रुत।
यत्कीर्तिकान्ता शुद्धापि चित्र दिक्पाललालिता ॥
तेजोध्वस्ताखिलरिपुतमा रुद्रभूपोदयाद्रे-
रुद्यन्नुच्चै क्षितिधरलसन्मस्तकन्यस्तपाद।
आशापूरप्रगुणवसुमान्वैबुधै सस्तुतोऽय
सार्थै सम्यग्जयति नितरा बेतभूपालसूर्य. ॥
सेयं पुण्यतनुर्विधाय विधिवच्छ्रीमद्विवाहोत्सव
बेतक्ष्मापतिशेखराय गणपक्षोणीश्वरेणादरात्।
दत्ता श्रीगणपाम्बिका गिरिसुतेवेशाय लक्ष्मीर्यथा
लक्ष्मीशाय विशालविश्रुतगुणैर्गौर्या च लक्ष्म्या समा ॥
तया सार्ध महाराज्य कृत्वा धर्म च शाश्वतम्।
याते बेतक्षमानाथे धन्ये देवेन्द्रससदम् ॥
श्रीधान्याङ्कपुरेऽमरेश्वरविभो. श्रीमद्विमानोपरि
सौवर्णा. कलशा ययातिमहसः सम्यक्प्रतिष्ठापिताः।
निर्मायात्र पुरेऽपि बेतनृपतेर्नाम्ना विभोर्मन्दिर
भर्त्तासौ शिवलोकशाश्वतसुखावासोत्सव प्रापित. ॥
भर्त्तुर्बेतमहीभर्त्तुस्तादृक्सुकृतसिद्धये।
शंभोरायतन कृत्वा प्राकारपरिशोभितम् ॥
तस्मिन्नायतने सौम्ये सौवर्णकलशोज्वले।
बेतेश्वरमहादेवप्रतिष्ठा विहिता तया ॥

तस्य रङ्गाङ्गभोगार्थं तयासौ दत्त उत्तमः ।
ग्राम. समग्रसस्याढ्यो बेनदेवीति विश्रुत. ॥
श्रीधान्याङ्कपुरे रम्ये महालक्ष्मीस्वरूपया ।
गणपाम्बामहादेव्या अन्यच्च सुकृत कृतम् ॥
गृहान्द्वादश सपाद्य वृत्तीश्चापि च पुष्कलाः ।
द्वादशादित्यसकाशा विप्रा सरक्षितास्तया ॥
गणपक्षितिनाथस्य पितुर्नाम्नापि निर्मितम् ।
गणपेश्वरमिति ख्यात देवतायतन तया ॥
तस्मै रङ्गाङ्गभोगार्थं गणपेशाय शभवे ।
ग्रामो दत्तो महादेव्या चिन्तापाडुरिति श्रुत ॥
यद्धस्तौ हरपूजनैकनिरतौ यस्याश्च दृष्टिश्रुती
शभोरन्वहकारितोत्सवलसत्सगीतसक्ते सदा ।
इत्थ या दिवसान्सुख गमयति प्राज्येऽपि राज्ये स्थिता
तन्नूनं गणपाम्बिका गिरिसुता तस्या' स्तुतौ क. प्रभु ॥

(एपिग्राफिआ इण्डिका—३।९६–१०१)

## (१४६)

## सायणमाधवाश्रयश्रीबुक्कमहाराजतनयहरिहरमहाराजशासनम् ।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शभवे ॥
हरेर्लीलावराहस्य दष्ट्रादण्ड. स पातु वः ।
हेमाद्रिकलशा यत्र धात्री च्छत्रश्रिय दधौ ॥

१ 'अस्य शासनलेखस्याधारभूतानि त्रीणि ताम्रपत्राणि Sir Walter Elliot महाशयेनानायितानि Dr Fleet महाशयेन Dr Hultzsch महाशयसमीपे प्रेषितानि तेन महाशयेन प्रसिद्ध्यर्थं मह्य दत्तानि' इति प्रकाशकवरा V Venkayya M. A महाशया

हेमाम्भोरुह किंजल्कपुञ्जपिञ्जरिताङ्घ्रये ।
विघ्नेश्वराय विघ्नानां निहन्त्रे विदधे नमः ॥
विष्णोरादिवराहस्य मूर्तिर्नित्यं श्रियेऽस्तु वः ।
धात्री महति दंष्ट्राग्रे धत्ते यस्तु श्रिया सह ॥
यद्दंष्ट्राङ्कुरगा हि भूरिह सतां कर्माणि वेदार्थिनां
तैर्नन्दन्त्यमरा हरिः कुलगुरुस्तेषां तदीया घनाः ।
ते वर्षन्ति भवन्ति सर्वलतिकासस्यानि वृष्ट्या प्रजा-
स्तैर्नन्दन्ति पितामहप्रणिहितास्तस्मै नमः पोत्रिणे ॥
आसीत्त्रैलोक्यजीवातुरानन्द इव मूर्तिमान् ।
परमेश्वरकोटीरप्रथमाभरणं शशी ॥
तदन्वये महातेजा यदुरासीन्महीपतिः ।
सोमवंश्या यतः श्लाघ्या यादवा इति विश्रुताः ॥
तस्मिन्यदुकुले श्लाघ्ये सोऽभूच्छ्रीसंगमेश्वरः ।
येन पूर्वविधानेन पालिताः सकलाः प्रजाः ॥
यद्यशःपुण्डरीकस्य कर्णिका कनकाचलः ।
मकरन्दप्रवाहोऽभून्महामन्दाकिनी नदी ॥
तस्य श्रीसंगमेन्द्रस्य पुत्रोऽभूत्पुण्यवैभवात् ।
वीरश्रीमङ्गलादर्शो वीरश्रीभुक्क[1]भूपतिः ॥
[2]सप्तार्चिरलसं लोका अभुजङ्गविभूषणम् ।
वदन्त्यनुग्रनामानं शिवं यं भुक्कभूपतिम् ॥
यत्कीर्तिलक्ष्म्याः क्रीडन्त्या ब्रह्माण्डं रत्नमण्डपः ।
मुक्ताच्छत्रं शशाङ्कस्तु दीपः शुक्रदिवाकरौ ॥

---

१ अन्येषु लेखेषु सायणमाधवरचितग्रन्थेषु च 'बुक्क' इति तृतीयादिरेवोपलभ्यते
२ सप्तार्चिषा वह्निना लस्यते शिवः, राजा तु क्रोधाग्नयेऽलसः आलस्यवान्. सर्पालंकार-शोभितः शिवः, राजा तु न विटसहचारी. शिवस्य तु उग्र इति नाम वर्तते, राज्ञो नाम तु नोग्रम्.

धर्मेण रक्षति क्षोणी वीरश्रीभुक्कभूपतौ ।
निरातङ्का भयात्तस्मिन्नित्यभोगोत्सवा प्रजा ॥
गौरीसहचरात्तस्मात्प्रादुरासीन्महेश्वरात् ।
शक्त्या प्रतीत स्कन्दाशो राजा हरिहरेश्वर. ॥
सर्ववर्णाश्रमाचारप्रतिपालनतत्परे ।
तस्मिंश्चतु समुद्रान्ता भूमिः कामदुघाभवत् ॥
सिहासनजुषस्तस्य कीर्त्या भान्ति दिशो दश ।
उदयाद्रिगतस्येन्दोर्ज्योत्स्नयेव कलानिधे. ॥
तुलापुरुषदानादिमहादानानि षोडश ।
कृतवान्प्रतिराजन्यवज्रपातात्तवैभव ॥

श्रीमद्राजाधिराजराजपरमेश्वर', पूर्वदक्षिणपश्चिमोत्तरसमुद्राधीश्वर, अनिवारित, दुष्टराजराजन्यभुजङ्गवैनतेय, शरणागतवज्रपञ्जर, कलिकालधर्म, कर्णाटकलक्ष्मीकर्णावतस, चतुर्वर्णाश्रमपालक, कुलगिरितटलिखितघोषण, रणरङ्गभीषण, परराजराजीवसुधाकर, परनारीसहोदर', पुण्यश्लोकप्रहर्ष, शार्दूलमदभञ्जन, चेरचोलपाण्ड्यस्थापनाचार्य, वेदभाष्यप्रकाशक:, वैदिकमार्गस्थापनाचार्य', कर्मोपेताध्वर्यु., राजकल्याणशेखर,

सिद्धसारस्वतेत्यादिबिरुदावलिभूषित,
स खलु श्रीवीरप्रतापहरिहरदेवमहाराय

धात्रीनेत्रगुणक्षपेश्वर(१३२१)मिते श्रीशालिवाहे गते
शाके गोत्रधच(२)प्रेमादिनि तिथौ(२) मास्यूर्जके नामनि ।
पक्षे तत्र वलक्षके बुधदिने श्रीपौर्णमास्या तिथौ
काले पुण्यमहत्तरे शुभकरे सोमोपरागे वरे ॥
श्रीतुङ्गभद्रापरिखे नगरे विजयाह्वये ।
पम्पाया भास्करक्षेत्रे श्रीविरूपाक्षसनिधौ ।

१ A D 1399 बोध्य. २. 'प्रमाथिनि' स्यात.

चन्द्रगिरिमहाराज्ये प्राज्ये पैयूरिकोट्टके ॥
नलद्दुरिपाळेंसीमाख्ये मेगुणावलनाड्डुके ।
तोण्डीरमण्डले ख्याते विद्वद्भिरुपशोभिते ॥
चिरुवापुर्युदग्भागे पनप्पाकस्य दक्षिणे ।
नैर्ऋत्यामरणीनद्यास्तोरनल्लूरिपश्चिमे ॥
स तत्रासीद्ग्रामवरो ग्रामो नल्लूरिसञ्ज्ञित. ।
पार्श्वकेदारजनुषा यो रेजे सस्यसपदा ॥
उमारमाकलत्राभ्यां सहितौ शिवकेशवौ ।
यळगोविल्लनीलद्दषनामानौ यत्र तिष्ठत ॥
पुर सावणराजीय प्रतिनाम्नेति विश्रुतम् ।
वृत्तिद्वादशसयुक्त तमिम ग्राममुत्तमम् ॥
सर्वमान्य चतु सीमासयुत च समन्तत ।
निधिनिक्षेपपाषाणसिद्धसाध्यजलान्वितम् ॥
अक्षिण्यागामिसयुक्तमष्टभोग्य सभूरुहम् ।
वापीकूपतटाकैश्च कच्छारामैश्च शोभितम् ॥
पुत्रपौत्रादिभिर्भोग्य क्रमादाचन्द्रतारकम् ।
दानस्याधमनस्यापि विक्रयस्यापि चोचितम् ॥
अदाद्ग्रामवर रम्य श्रीनल्लूरिति सञ्ज्ञितम् ।
औमळाध्वरिवर्याय सानुजाय विपश्चिते ॥
श्रीभरद्वाजगोत्रीयवरनारायणात्मज ।
आर्च औमळयज्वा तु षड्वृत्तिमिह चाश्नुत ॥
तस्यानुजो महातेजा श्रुतिसागरपारग. ।
नृसिहयज्वा च कृती वृत्तिषट्कमवाप्तवान् ॥
परीत॰ प्रयतै स्निग्धै पुरोहितपुरोगमै. ।
विविधैर्विबुधैः श्रौतपथिकैरधिकैर्गिरा ॥

वीरः श्रीवरबुक्कभूपतनयः क्ष्मापालचूडामणि
प्रेङ्खत्कीर्तिविभूषितत्रिभुवन. स्फूर्जत्प्रतापोदय ।
आचन्द्रार्कमगारवद्वसुमतीमाचक्रवालाचल
श्रीमानाहवराघवो हरिहरः स्वा पालयत्यन्वहम् ॥
स भूयो याजको धीमान्कोटिशाराध्यनन्दन ।
शासनश्लोककर्ता वै मल्लनाराध्यवृत्तिक ॥
तच्छासनमिद स्वामिशासनेन विलेखितम् ।
शासनाचार्यवर्येण मुद्दणेन च शिल्पिना ॥
स्वदत्ताद्द्विगुण पुण्य परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्त निष्फल भवेत् ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
षष्टिं वर्षसहस्राणि विष्ठाया जायते क्रिमि ॥
एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोज्या न करग्राह्या विप्रदत्ता वसुधरा ॥
सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो भवद्भि ।
सर्वानेतान्भाविन पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्र ॥
मद्वशजा' परमहीपतिवशजा वा
ये वशजा सततमुज्वलधर्मचित्ता ।
मद्धर्ममेव परिपालनमुद्वहन्ति
तत्पादपद्मयुगल शिरसा वहामि ॥
श्रीविरूपाक्ष ॥

(एपिग्राफिआ इण्डिका—३।१२०–१२४)

# ( १४७ )

## इन्द्रवर्मणोऽच्युतपुरोपलब्धशासनम्।

ॐ स्वस्ति। सर्वर्तुरमणीयाद्विजयकलिङ्गनगरात्सकलभुवननिर्माणैकसूत्रधारस्य भगवतो गोकर्णस्वामिनश्चरणकमलयुगलप्रणामादपगतकलिकलङ्को विनयनयसपदामाधार स्वासिधारापरिस्पन्दाधिगतसकलकलिङ्गाधिराज्यश्चतुरुदधितरङ्गमेखलावनितलप्रवितताामलयशा अनेकसमरसक्षोभजनितजयशब्दो गाङ्गामलकुलप्रतिष्ठ प्रतापातिशयानामितसमस्तसामन्तचूडामणिप्रभामञ्जरीपुञ्जरञ्जितशरणो मातापितृपादानुध्यात परममाहेश्वर श्रीमहाराजेन्द्रवर्मा वराहवर्तन्या सिद्धार्थकग्रामे सर्वसमवेतान्कुटुम्बिन समाज्ञापति—विदितमस्तु वो यथास्मिन्ग्रामे राजतटाकक्षेत्रे हलस्य भूश्छेदीकृत्य सर्वकरपरिहारेणाचन्द्रार्कप्रतिष्ठ कृत्वा मातापित्रोरात्मनश्च पुण्याभिवृद्धये गौतमसगोत्राय छन्दोगसब्रह्मचारिणे दुर्गशर्मणे मातृभट्टारिकापादाना तटाकप्रतिष्ठापनमुदगयन उदकपूर्वमस्माभि सम्प्रदत्ता, तद्विदित्वा स्वभूमिमनुपालयतान्न केनचित्परिबाधा कार्या। सीमालिङ्गानि—पूर्वेण राजतटाकपाली, सैव दक्षिणेन, पश्चिमेन परिपाट्या वल्मीकत्रयम्, उत्तरपाल्या कपाटसध्युपरि पाषाण, तत सेष्टकोऽन्य पाषाण', ततो धिमारतरुद्वयम्, तत कारकवृक्षश्चेति। तटाकोदकबन्धमोक्षे न केनचिद्विघात कार्य इति भविष्यद्राजभिश्चाय दानधर्मोऽनुपाल्य। तथा च व्यासगीता श्लोका—

बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥

---

१ अस्य शासनस्याधारभूतानि ताम्रपत्राणि गञ्जामपरिगणे मुखालिङ्गम्ग्रामसमीपस्थे अच्युतपुरग्रामे मल्लप्रगदसूर्यप्रकाशरावमहाशयस्य गृहे सुरक्षिता न्यासन् तानि च परलाकिमेदीग्रामनिवासि Mr G V Ramamurti महाशयबोधितानि गञ्जमपरिगणाध्यक्षेणानाय्य मह्य दत्तानि अधुना त्वस्मत्प्रार्थनात स्ताम्रपत्रस्थानैव मद्राजनगरप्रदर्शिन्यां स्थापितानि वर्तन्ते—इति प्रकाशकवरा E Hultzsch, Ph D महाशया

षष्टि वर्षसहस्राणि मोदते दिवि भूमिद ।
आक्षेप्ता चानुमन्ता च तान्येव नरके वसेत् ॥
स्वदत्ता परदत्ता वा यत्नाद्रक्ष युधिष्ठिर ।
मही महिमता श्रेष्ठ दानाच्छ्रेयोनुपालनम् ॥ इति ।

वर्धमानविजयराज्यसवत्सरा सप्ताशीति ८७ चैत्रामावास्याम् । इद विनयचन्द्रेण भानुचन्द्रस्य सूनुना शासन राजसिंहस्य लिखित स्वमुखाज्ञया ॥

(एपिग्राफिआ इण्डिका—३।१२८–१२९)

---

## (१४८)

## श्रीगुणार्णवसूनुदेवेन्द्रमहाराजानां चिककोलग्रामोपलब्धं शासनम्[१]।

ॐ स्वस्ति । सकलवसुमतीतलतिलकायमानात्सर्वर्तुसुखरमणीयाद्विजयवतकलिङ्गनगरान्महेन्द्राचलामलशिखरप्रतिष्ठितस्य चराचरगुरो' सकलभुवननिर्माणैकसूत्रधारस्य भगवतो गोकर्णस्वामिनश्चरणकमलयुगलप्रणामाद्विगलितकलिकलङ्को गाङ्गामलकुलतिलको निजनिस्त्रिंशधारोपार्जितसकलकलिङ्गाधिराज्य प्रविततचतुरुदधितरङ्गमेखलावनितलामलयशा अनेकाहवसक्षोभजनितजयशब्द प्रतापावनतसमस्तसामन्तचक्रचूडामणिप्रभामञ्जरीपुञ्जरञ्जितचरण परममाहेश्वरो मातापितृपादानुध्यातो नयविनयशौर्यौदार्यसत्यत्यागसपदामाधारभूत. श्रीगुणार्णवसूनुर्महाराज' श्रीमान्देवेन्द्रवर्मा क्रोष्टुकवर्तन्या सरउमटम्बे पोप्पङ्किग्रामे सर्वसमवेतान्कुटुम्बिनः समाज्ञापयत्यस्ति । विदितमस्तु भवता यथास्माभिरय ग्राम सर्वकरभरै.

---

१. अस्य शासनस्याधारभूत ताम्रपत्रत्रय चिकाकोलग्रामे गञ्जामपरिगणस्योपकलेक्टरपदवीकस्य महाशयस्य कार्यालये प्राप्त Mr C J Weir I C S. महाशयेन तत्रत्यकार्यकारिणा मम समीपे प्रेषितम् अधुना च मद्रासप्रदर्शिन्यां वर्तते—इति शोधकवरा E Hultzsch, Ph. D महाशया

परिहृत्याचन्द्रार्कप्रतिष्ठमग्रहार कृत्वोदकपूर्व मातापित्रोरात्मनश्च पुण्याभिवृद्धये माघमास्युदगयने शुद्धाष्टम्या कलिङ्गानगरवास्तव्येभ्यश्छन्दोगसब्रह्मचारिभ्य कृष्णात्रेयसगोत्रेभ्यो वेदवेदाङ्गपारगेभ्यो च्छरम्पशर्मभवशर्मशिवशर्मविष्णुशर्मसोमशर्मकुमारशर्मभ्यो भ्रातृभ्य सप्रदत्त । तदेव विदित्वा यथोचितभागभोगमुपनयन्त सुख प्रतिवसथ इति । अस्य ग्रामस्य सीमाविधयो भवन्ति—पूर्वस्या दिशि विषयगर्ता गता, दक्षिणस्या दिश्यपि गर्तैव, पश्चिमस्या दिशि पोप्पङ्गिकपर्वतोदक सायदकपर्वतोदक च यत्रैकीभूय वहति यावद्दक्षिणदिक्स्था गर्तेति, उत्तरस्या दिशि कोशम्बवृक्षगिणिगिणिवृक्षौ, तत कुरुडुम्बिग्रामस्य च सीमा, ततस्तिन्दुकवृक्ष , पुनरपि तिन्दुक, कुब्जजम्बूवृक्षवेणुगुल्मसहित कदम्बवृक्ष , अत पुरुषच्छायया यावत्पूर्वदिक्स्था विषयगर्तेति ॥ भविष्यतश्च राज्ञ प्रज्ञापयति धर्मक्रमविक्रमाणामन्यतमयोगादवाप्य महीमनुशासद्भिरय दानधर्मोऽनुपालनीय । व्यासगीताश्चात्र श्लोका भवन्ति—

'बहुभिर्वसुधा दत्ता राजभि सगरादिभि ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्ता परदत्ता वा यत्नाद्रक्ष युधिष्ठिर ।
महीं महिमता श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
षष्टिं वर्षसहस्राणि स्वर्गे मोदति भूमिद ।
आक्षेप्ता चानुमन्ता च तान्येव नरके वसेत् ॥' इति ।
अपूर्वनटवश्येन मातृचन्द्रस्य सूनुना ।
लिखित पल्लवचन्द्रेण शासन स्वमुखाज्ञया ॥

महत्तरशवरनन्दिप्रत्यक्षमिति । प्रवर्धमानविजयराज्यसवत्सरशत त्र्यशीति १८३ श्रावणे मासि दिने विंशे, उत्कीर्णं खण्डिचन्द्रभोगिकतनयेन सर्वचन्द्रेणेति ॥

(एपिग्राफिआ इण्डिका—३।१३१-१३३)

---

## (१४९)

### श्रीवेङ्कटपतिदेवमहाराजदत्तकूनियुर्ग्रामशासनम्[1]।

यस्य सपर्कपुण्येन नारीरत्नमभूच्छिला।
यदुपास्य सुमनसा तद्वस्तुद्वन्द्वमाश्रये॥
यस्य द्विरदवक्त्राद्या॰ पारिषद्या पर शतम्।
विघ्न निघ्नन्ति भजता विष्वक्सेन तमाश्रये॥
जयति क्षीरजलधेर्जात सव्येक्षण हरे।
आलम्बन चकोराणाममरायुष्कर मह॥
पौत्रस्तस्य पुरूरवा बुधसुतस्तस्यायुरस्यात्मज
सजज्ञे नहुषो ययातिरभवत्तस्माच्च पूरुस्तत॰।
तद्वशे भरतो बभूव नृपतिस्तत्सततौ शंतनु-
स्तत्तुर्यो विजयोऽभिमन्युरुदभूत्तस्मात्परीक्षित्तत॥
नन्दस्तस्याष्टमोऽभूत्समजनि नवमस्तस्य राज्ञश्चलिक्क-
क्ष्मापस्तत्सप्तम श्रीपतिरुचिरभवद्राजपूर्वो नरेन्द्र।
तस्यासीद्विज्जलेन्द्रो दशम इह नृपो वीरहेमालिराय-
स्तार्तीयीको मुरारौ कृतनतिरुदभूत्तस्य मायापुरीश॰॥
तत्तुर्योऽजनि तातपिन्नममहीपालो निजालोकन-
त्रस्तामित्रगणस्ततोऽजनि हरन्दुर्गाणि सप्ताहितात्।
अह्नैकेन स सोमिदेवनृपतिस्तस्यैव जज्ञे सुतो
वीरो राघवदेवराडिति तत श्रीपिन्नमोऽभून्नृपः॥
आरवीटिनगरी विभोरभूत्तस्य बुक्कधरणीपति सुत।
येन सालुवनृसिहराज्यमप्येधमानमहसा स्थिरीकृतम्॥

---

१ 'अस्य शासनस्याधारभूतानि सप्त ताम्रपत्राणि तिन्नवेल्लीपरिगणस्य अम्बा॰समुद्रताल्लुकाया कूनियुर्ग्रामवास्तव्यब्राह्मणस्य सन्ति, Dr Hultzsch महाशयपार्श्वे निरीक्षणाय Mr T Varada Rao महाशयेनोक्तपरिगणोपाकलेक्टरसज्ञकेन प्रेषितानि, इति H Krishna S'âstri महाशया प्रकाशका, लेख कालस्तु १५५६ शक (1478 A D) रूप॰ स्फुट एव लिखित

स कामिनी' स्वतनुकान्तिभिराक्षिपन्तीं
बुक्कावनीपतिलको बुधकल्पशाखी ।
कल्याणिनीं कमलनाभ इवाब्धिकन्या
बल्लाम्बिकामुदवहद्बहुमान्यशीलाम् ॥
सुतेव कलशाम्बुधे सुरभिलाशुग माधवा-
त्कुमारमिव शंकरात्कुलमहीभृत कन्यका ।
जयन्तममरप्रभोरपि शचीव बुक्काधिपा-
च्छ्रुत जगति वल्लभालभत रामराजं सुतम् ॥
श्रीरामराजक्षितिपस्य तस्य चिन्तामणेरर्थिकदम्बकानाम् ।
लक्ष्मीरिवाम्भोरुहलोचनस्य लक्काम्बिकामुष्य महिष्यलासीत् ॥
तस्याधिकै समभवत्तनयस्तपोभि
श्रीरङ्गराजनृपतिः शशिवशदीप ।
आसन्समुल्लसति धामनि यस्य चित्र
नेत्राणि वैरिसुदृशा च निरञ्जनानि ॥
सतीं तिरुमलाम्बिकां चरितलीलयारुन्धती-
प्रथामपि तितिक्षया वसुमतीयशो रुन्धतीम् ।
हिमांशुरिव रोहिणीं हृदयहारिणीं सद्गुणै-
रमोदत सधर्मिणीमयमवाप्य वीराग्रणी ॥
रचितनयविचार रामराजं च धीर
वरतिरुमलरायं वेङ्कटाद्रिक्षितीशम् ।
अजनयत स एतानानुपूर्व्यात्कुमारा-
निह तिरुमलदेव्यामेव राजा महौजा ॥
सकलभुवनकण्टकानरातीन्समिति निहत्य स रामराजवीर ।
भरतमनुभगीरथादिराजप्रथितयशा प्रशशास चक्रमुर्व्याः ॥
त्रिषु श्रीरङ्गक्ष्मापरिवृढकुमारेष्वधिरण
विजित्यारिक्ष्मापास्तिरुमलमहाराजनृपति ।

महौजा साम्राज्ये सुमतिरभिषिक्तो निरुपमे
प्रशास्त्युर्वीं सर्वामपि तिसृषु मूर्तिष्विव हरिः ॥
यशस्विनामग्रसरस्य यस्य पट्टाभिषेके सति पार्थिवेन्दो ।
दानाम्बुपूरैरभिषिच्यमाना देवीपदं भूमिरियं दधाति ॥
सामादयो विधिमुखादिव सत्यवाचः
सामाद्युपायनिवहा इव सायुगीनात् ।
रामादयो दशरथादिव राजमौले-
स्तस्मादमेययशसस्तनया बभूवुः ॥
राजा ततोऽभूद्रघुनाथनामा **श्रीरङ्गरायः** श्रितपारिजातः ।
**श्रीरामराजः** शिशिरांशुरुर्व्यां विख्यातिमान्वेङ्कटदेवरायः ॥
**श्रीरङ्गरायः** सहजेषु तेषु पारंगतो नीतिपयःपयोधेः ।
अष्टासु दिक्षु प्रथितस्य लेभे पट्टाभिषेकं **पेनुगोण्ड**राज्ये ॥
अथ **श्रीवेङ्कटपतिर्देवरायो** नयोज्ज्वलः ।
अवनीमशिषत्कीर्त्या दिशो दश विशोभयन् ॥
तज्ज्यायसः सुरद्रुमलज्जावहचरित**रामराज**विभोः ।
जातस्**तिरुमलराजः** ख्यातः **श्रीरङ्गरायो**ऽपि ॥
तयोः **श्रीरङ्गरायस्य** तनया विनयाधिकाः ।
अजायन्त दयावन्तः श्रुतवन्तो यशस्विनः ॥
**श्रीरङ्गराय**नृपतेस्तनयेषु तेषु
पारं गिरामधिगतः कविपुंगवानाम् ।
रत्नेषु कौस्तुभ इवाम्बुधिसंभवेषु
**श्रीरामराय**नृपतिः सुचिरं व्यलासीत् ॥
पूर्वं विश्रुत**रामराज**नृपतेः श्रीरामभद्राकृते
कल्याणोदयशालिनस्तनुभवाः पञ्च प्रपञ्चावने ।
दक्षा नीतिपथानुगाः समभवन्क्षीरापगाकामिनो
गीर्वाणालयभूरुहा इव बुधश्रेणीष्टदानोत्सुकाः ॥

आज्ञाविजितसुग्रीवा प्राज्ञावनकृताग्रहा ।
सर्वे ते विबुधग्राह्या गुणै रुचिरविग्रहा ॥
विख्यातचर्येषु नृपेषु तेषु श्रीरङ्गराज शिशिरांशुरुर्व्या· ।
विश्वत्रये विश्रुतकीर्तिरासीत्सौरेषु शालेष्विव पारिजात ॥
यद्भेरीघनभाकृतिश्रवणतो भीत्या महत्या रण-
प्रत्यर्थिक्षितिपै· पलायनपरैर्मुक्ता लुठन्त श्रमात् ।
कान्ताराभरणीभवन्ति कलशच्छत्रध्वजाङ्काञ्चिता-
न्युन्मार्जन्त्यधिभू(?)पदानि तदनुव्रज्याभिया किं हया· ॥
श्रीरङ्गराजस्य तपोविशेषै सतोषिणः शेषगिरीश्वरस्य ।
कारुण्यभूम्ना कमनीयशोभौ पुत्रावभूता पुरुहूतभोगौ ॥
पेदवेङ्कटेन्द्रपिनवेङ्कटाभिराडिति नामकौ प्रकृतिपालनोत्सुकौ ।
[1]खरदूषणप्रहतिदक्षिणावुभौ [2]देदत (?) प्रमोदमिव रामलक्ष्मणौ ॥
श्रीशाली पेदवेङ्कटेन्द्रनृपतिर्ज्येष्ठो वयोभिस्तयो·
शौर्यौदार्यगभीरताधृतिकलापूर्वैश्च सर्वैर्गुणै· ।
यस्यारातिनृपालभेदनकलायात्रासु सेनारज -
पूरैर्भूर्जलधिर्भवेदिति हरिश्चित्तेऽस्य धत्ते स्थितिम् ॥
शृङ्गारराज्यास्पददिव्यमूर्त्या बङ्गारमाम्बारमया समेत ।
विभात्यसौ वेङ्कटभूमिपाल शच्येव शक्रो रमयेव शौरि· ॥
श्रीरङ्गराजेन्द्रकुमारकेऽस्मिन्वीरोत्तमे वेङ्कटदेवराये ।
पट्टाभिषिक्ते पेनुगोण्डराज्ये तदाभिषिक्ता· सुधियोऽपि हेम्ना ॥
यथा रघुकुलोद्वह· स्वयमरुन्धतीजानिना
स्वगोत्रगुरुणा सुधीतिलकतातयार्येण यः ।
यथाविधि यशस्विना विरचिताभिषेकः क्षणा-
द्विभिद्य यवनाशरान्विजयते प्रशासन्महीम् ॥

---

१ खरदूषणौ राक्षसौ, खरं दूषण च. २ 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति परिभाषाश्रयणात्परस्मैपदम्

वाराशिगाम्भीर्यविशेषधुर्यश्चौरासिदुर्गैकविभालवर्य ।
पराष्टदिग्रायमन.प्रकामभयंकर शार्ङ्गधरान्तरङ्ग ॥
सारवोररमया समुल्लसन्नारवीटिपुरहारनायक ।
कुण्डलीश्वरमहाभुज श्रयन्मण्डलीकधरणीवराहताम् ॥
आत्रेयगोत्रजानामग्रसरो भूभुजामुदारयशा ।
अतिविरुदतुरगधट्टो मतिगुरुरारट्टमगधमान्यपद ॥
सोऽय नीतिजितादिभूपतितति सुत्रामशाखी सुधी-
सार्थाना भुजतेजसा स्ववशयन्कर्णाटसिंहासनम् ।
आ सेतोरपि चाहिमाद्रि विमतान्संहृत्य शासन्मुदा
सर्वोर्वी प्रचकास्ति वेङ्कटपतिश्रीदेवरायाग्रणी. ॥
ऋतुबाणकळवेन्दु(१५५६)गणिते शकवत्सरे ।
भावाभिधानके वर्षे मासि वैशाखनामनि ॥
पक्षे वळक्षे पुण्यर्क्षे पौर्णमास्या महातिथौ ।
श्रीवेङ्कटेशपादाब्जसंनिधौ श्रेयसा निधौ ॥
नानाशाखाभिधागोत्रसूत्रेभ्य शास्त्रवित्तया ।
विख्यातेभ्यो द्विजेन्द्रेभ्यो वेदविद्भ्यो विशेषतः ॥
श्रीमत्तिर्वडिराज्यस्थ मुळिळ्भाङ्ग इति श्रितम् ।
श्रीमद्वीरवनल्लूरुमाघाणि इति शोभितम् ॥
ताम्रपर्णीमहानद्या दक्षिणस्या दिशि स्थितम् ।
कारुकुर्चिमहाग्रामात्प्राच्या दिशि च संस्थितम् ॥
श्रान्तमङ्गलसीमाया दक्षिणाशामुपाश्रितम् ।
श्रीशेखरान्महादेविग्रामात्पश्चिमत. स्थितम् ॥
पर्वतोद्भ्महामार्गादुत्तराशामुपाश्रितम् ।
कारुकुर्च्या पञ्चदशकुल्याया क्षेत्रयुग्मगम् ॥
ग्राम च सर्वसस्याढ्य द्विषष्टिगणसंयुतम् ।
मुद्दुकृष्णापुरमिति प्रतिनाम्ना सुशोभितम् ॥

कूनियूरिति विख्यात गृहारामोपशोभितम् ।
सर्वमान्य चतु सीमासहित च समन्तत ॥
निधिनिक्षेपपाषाणसिद्धसाध्यजलान्वितम् ।
अक्षिण्यागामिसयुक्त गणभोज्य सभूरुहम् ।
पुत्रपौत्रादिभिभोज्य क्रमादाचन्द्रतारकम् ॥

आसीत्काश्यपसततेर्घनतप सतुष्टविश्वेश्वर-
स्वैरानुग्रहभाजनाद्गुणनिधे श्रीनागपृथ्वीपते ।
विद्वन्म[illegible]तार्थकृतिमूर्धन्यादवन्यां महा-
वीराणा धुरि विश्वनाथधरणीसंक्रन्दनो मानित ॥

तस्मादजायत धनेशसमानधर्मा
धर्मानुशासितधरातलजीवलोक ।
आख्यानुरूपविजितारिनृपालमौलि-
विख्यातिमाञ्जगति कृष्णपिनायकेन्द्र ॥

तस्याजनिष्ट ततकीर्तिमह समेत
श्रीवीरपेन्द्रधरणीतलशीतभानु ।
आमोदन कुवलयस्य तथा बुधाना-
मालम्बन शिथिलितारिमनोविनोद ॥

तस्योदभूद्विश्वपनायकेन्द्र प्रतीपभूपालतम सुधाशु ।
श्रीमुद्दुकृष्णप्रभुरस्य जज्ञे प्रतापवान्मेरुसमानधैर्य ॥

तस्यास्ता मुद्दुवीरप्रभुतिरुमलभूपालकौ नन्दनौ द्वौ
मीनाक्षीसुन्दरेशस्थिरतरकरुणापूरधारानिधानौ ।
आकैलासाद्रिसेतुप्रथितनिजयशोभासमानौ यदीया-
घ्याज्ञा राज्ञा किरीटस्फुरितमणिमयालङ्कृतिर्माननीया ॥

अथ तिरुमलभूपो मन्त्रिमुख्यैरनेकै
सकुतुकमभिषिक्त सर्वराज्याधिपत्ये ।

समधिककृपयासौ सुन्दरेशस्य लब्ध्वा
धरणितलमशेष राजते भूतलेन्द्र ॥
एतस्य परदुर्वारभुजविक्रमशालिन ।
भोगे भूलोकसुत्राम्णस्त्यागे भूकल्पशाखिन ॥
करीन्द्रारोहमात्रेण गिरीन्द्रारूढविद्विषः ।
लङ्घिते नगरे जेतु लङ्घितार्णववैरिण ॥
कन्यान्नस्वर्णभूदानै. कालक्षेप वितन्वत ।
जयन्तचन्द्रकन्दर्पजयसौन्दर्यशालिन. ॥
श्रीमत्तिरुमलेन्द्रस्य विज्ञप्तिमनुपालयन् ।
श्रीवीरवेङ्कटपतिर्महारायमहीपति. ॥
स हिरण्यपयोधारापूर्वक दत्तवान्मुदा ।
वृत्तिमन्तोऽत्र लिख्यन्ते विप्रा वेदान्तपारगा ॥
वेङ्कटाद्रीन्द्रतनयो भारद्वाजी च याजुष ।
क्षेत्र स लब्धवानेक रघुनाथाभिधो मखी ॥
लक्ष्मीनृसिहयज्वेन्द्र( ) सुत. श्रीवत्सगोत्रज ।
लक्ष्मीनरहरिर्यज्वा वृत्तिमर्धाधिकामगात् ॥
गोत्रे हरितसे जात प्राप्तस्तिम्मरसात्मज. ।
वेङ्कटाद्रिद्विजोऽप्येका वृत्तिं याजुषिकोत्तम ॥
आत्रेयगोत्र सप्राप्तोऽप्याश्वलायनसूत्रवान् ।
सदाशिवसुत क्षेत्र त्रिपाद ध्रुवमीश्वरः ॥
श्रीरङ्गराजपुत्र कनकसभापतिरतीव मेधावी ।
कौशिककुलप्रभूतोऽगृह्णाद्वृत्तिद्वय यजुर्वेदी ॥
प्रतीतकौशिकान्वयायसिन्धुबन्धुचन्द्रमा-
श्चिर धरातले ऋचा धुरधर स बन्धुमान् ।
अनन्तभट्टनन्दनोऽपि चाय्यभट्टभूसुर-
स्त्रिपादयुक्तवृत्तिपञ्चक समेत्य शोभते ॥

काश्यपान्वयज श्रीमानापस्तम्बी च लब्धवान् ।
तिरुमलार्यसुतो मल्लुभट्टो वृत्तिं स एकिकाम् ॥
मारुभट्टसुतो भारद्वाजी याजुषिकोत्तम ।
वेङ्कटाद्रिवर श्रीमान्वृत्तिमेका समश्नुते ॥
अरुणाद्रिसुतो भारद्वाजी ऋग्वेदवानयम् ।
यल्लप्पभूसुर क्षेत्र प्राप्तवानर्धमत्र तु ॥
काश्यपान्वयजो लब्ध्वा यजुर्वेदी विराजते ।
भ्रान्तीश्वरो महान्वृत्तिमर्धामप्पलयात्मभू ॥
आश्वलायनसूत्रोऽय भारद्वाजान्वयी सुत ।
श्रीवेङ्कटपतेरेका वृत्तिं नागरसोऽश्नुते ॥
भारद्वाजकुलोद्भूतोऽप्यर्धं याजुषिकोत्तम ।
क्षेत्र रघुपतेः सूनुरळगाद्रिरिहाश्नुते ॥
श्रीवत्सगोत्रगोविन्दसुतो घटलयाभिध ।
ऋग्वेदवानय प्राप्य त्रिपादा वृत्तिमेधते ॥
आत्रेयगोत्रजोऽगृह्णात्सामवेदाब्धिपारग. ।
श्रीनिवासात्मजो वृत्तिद्वय नरहरिर्महान् ॥
आत्रेयगोत्रज सोमनाथो याजुषिकोत्तम ।
नरसंघट्टपुत्रोऽय क्षेत्रेणार्धेन राजते ॥
अनन्तभट्टपुत्रोऽसौ श्रीनिवासोऽतिधार्मिक ।
कौशिकान्वयजोऽप्येक (।) क्षेत्र याजुषिकोऽग्रहीत् ॥
काश्यपान्वयभूषोऽयमापस्तम्बी महायशा' ।
वेङ्कटय्यसुत क्षेत्र सिद्धयोऽप्येकम(ा)श्नुते ॥
वसवावधानिन पुत्रो नागादीक्षितशेखर ।
भारद्वाजी च ऋक्छाखी क्षेत्रमर्धं प्रपेदिवान् ॥
जातो हरितसे वंशे यजुर्वेदी समेयिवान् ।
कालहस्तिसुत. क्षेत्र त्रिपाद भुवमङ्गयः ॥

वत्सगोत्रभव सत्याषाढसूत्रोऽपि चैककम् ।
श्रीनल्लपेरुमाळसूनुरारूरः क्षेत्रमश्नुते ॥
सजात काश्यपे श्रीमान्यजु शाखी समेयिवान् ।
नरसिंहात्मज क्षेत्र पादत्रयमहोबल ॥
काश्यपान्वयजो वृन्दावननाथसुतोत्तम· ।
ऋक्छाखी नङ्नारूभट्टः क्षेत्रमर्धं स लब्धवान् ॥
सिङ्गपेरुमाळ्नन्दनोऽयं वेङ्कटतप्पभूसुर· ।
क्षेत्रद्वय च ऋग्वेदी श्रयत्यात्रेयगोत्रज· ॥
यजुर्वेदविदा श्रेष्ठो भारद्वाजकुलोद्भव ।
पेद्दिभट्टसुतो नीलकण्ठो वृत्त्यार्धयाञ्चति ॥
श्रीवत्सगोत्रभू· सोमाभट्टजो याजुषोत्तम ।
श्रीमॉंल्लक्ष्मणशास्त्रीन्द्र क्षेत्रमर्धं समश्नुते ॥
आपस्तम्बी च गोविन्ददीक्षितः कौशिकान्वय ।
कृष्णंभट्टोऽपि केदारमर्ध लब्ध्वा समेधते ॥
पेरुभट्टसुतस्तिम्मावधानी याजुषोत्तम ।
भारद्वाजकुलोद्भूतो वृत्तिमर्धां समेयिवान् ॥
कौशिकान्वयवॉल्लिङ्गावधानी मल्लुभट्टज· ।
आपस्तम्बी च केदारमर्धं प्राप्य विशोभते ॥
पुत्रो नरहरेरापस्तम्बी शेषाद्रिभूसुर ।
शालावतसगोत्रोऽयं क्षेत्रद्वयमिहाश्नुते ॥
भारद्वाजान्वये जातो यल्लुभट्टस्य नन्दन ।
नारसिंहो यजुर्वेदी वृत्तिमेकामिहाश्नुते ॥
श्रीमान् तिरुमलभट्टोऽपि जातो हरितसे कुले ।
नागाभट्टसुत· क्षेत्रमेक लब्ध्वा विजृम्भते ॥
कौण्डिन्यवशसभूत कृष्णभागवतोत्तम· ।
केदारेण त्रिपादेन कुबेर इव राजते ॥

लिङ्गावधानिन' पुत्रो भारद्वाजी च याजुष ।
रामलिङ्गावधानीन्द्र क्षेत्रमेकमिहाश्नुते ॥
आत्रेयगोत्रजो गङ्गाधरयज्वात्मजोऽश्नुते ।
यजुर्वेदी श्रीनिवासशास्त्री केदारमर्धकम् ॥
शेषाद्रिनन्दनस्तिम्मावधानी याजुषोत्तम ।
भारद्वाजकुले जातस्त्रिपादा वृत्तिमश्नुते ॥
यल्लयज्वसुतो लक्ष्मीनरसिंहबुधोऽग्रहीत् ।
आपस्तम्बी महान्नेक क्षेत्रमात्रेयगोत्रवान् ॥
आत्रेयगोत्रजोऽप्याळ्वार्सुत श्रीवेङ्कटेश्वरः ।
क्षेत्रमेक त्रिपाद च लब्धवानृग्विभूषण ॥
आत्रेयगोत्र ऋग्वेदी श्रीमानीश्वरनन्दन ।
क्षेत्र कळप्परान्पादत्रय प्राप्य समेधते ॥
विश्वामित्रकुले जात ऋक्शाखी चाय्यपो महान् ।
अनन्तकृष्णतनयो वृत्तिमर्धामिहाश्नुते ॥
पेरियतिरुवडिः श्रीमाश्चोक्कनाथमखीन्द्रज ।
धनजयान्वयी क्षेत्रद्वयमृग्वेदवानगात् ॥
आत्रेयवंश्य ऋक्शाखी नारायणवरात्मज ।
श्रीरामभट्टः केदारमेकमासाद्य वर्धते ॥
आपस्तम्बी भरद्वाजवंश्य शिङ्गिरिनन्दन ।
नारायणोऽप्यर्धवृत्ति समेत्य धनदायते ॥
गिरियप्यकुमारोऽय श्रीवेङ्कटपतिर्महान् ।
श्रीवत्सगोत्री ऋक्शाखी वृत्तिमेका प्रपेदिवान् ॥
लब्धवारुणगिरेः पुत्र सूर्यनारायणोऽश्नुति ।
कौण्डिन्यवंशज क्षेत्रमेक याजुषिकोत्तम. ॥
तिरुवेङ्कडनाथस्य पुत्रो वडमलोऽश्नुते ।
वत्सगोत्रभव क्षेत्रमेक याजुषिकोत्तम ॥

कौण्डिन्यगोत्रजोऽनन्तनारायणसुतोऽश्नुते।
रामाभट्टवरः क्षेत्रमेक याजुषिकोत्तम ॥
तस्यानुजो राघवश्च क्षेत्रमेक स लब्धवान्।
यल्लयो रङ्गयश्चैव वेङ्कटाद्रिश्च वेङ्कपः ॥
चत्वार क्षेत्रमेक तु वर्धन्ते प्रतिगृह्य ते।
कौण्डिन्यवशज' सत्याषाढसूत्र समेयिवान् ॥
वेङ्कटाद्रिवर क्षेत्रत्रय गणपतेः सुत।
रघुनाथमखी व्यासरायभट्टसुतोऽश्नुते ॥
वृत्तिमेका सामवेदी भारद्वाजकुलोद्भव.।
नारायणोऽनन्तभट्टसुत सङ्कृतिगोत्रज ॥
लब्धवानर्धकेदार श्रीबोधायनसूत्रवान्।
धर्मराजो वत्सगोत्री पादक्षेत्रमिहाश्नुते ॥
नारायणो राघवस्य सुतो भार्गवगोत्रज।
प्राप्तवानर्धकेदार धीमाञ्जैमिनिसूत्रवान् ॥
आपस्तम्बी भरद्वाजवश्यो भास्करभट्टज।
सूर्यनारायणः सोऽय वृत्तिमेका समश्नुते ॥
शिङ्गिरेर्नन्दनश्चोकावधानी याजुषोत्तम।
लोहितान्वयभूरर्धां वृत्तिमासाद्य वर्धते ॥
चिदम्बरावधानी च श्रीमान्वरदभट्टज।
कौशिकान्वयवानापस्तम्बी वृत्त्यार्धयाञ्चति ॥
आत्रेयवशजो रामावधानी याजुषोत्तम।
जगन्नाथकुमारोऽयमर्धं क्षेत्रमिहाप्तवान् ॥
कौशिकान्वयजो रामचन्द्रभट्टसुतोऽश्नुते।
श्रीनिवासद्विजोऽप्येक क्षेत्र याजुषिकोत्तम ॥
श्रीमानगस्त्यविबुधोऽप्यर्धवृत्तिमिहाश्नुते।
अर्धवृत्ति कोण्डवीटिरामलिङ्गबुधोऽग्रहीत् ॥

आत्रेयगोत्रज सर्वनाथो दीक्षितशेखर ।
अर्धवृत्तिं समासाद्य ऋक्शाखी धनदायते ॥
एते सर्वे द्विजश्रेष्ठा पूर्वोक्त ग्राममुत्तमम् ।
श्रीकर्नाटककुल्यायास्तीरस्थतरुशोभितम् ॥
भट्टवृत्ति विना सर्वदेवदायसमन्वितम् ।
कपटाजोलेसहित तिरुतुवलयान्वितम् ॥
मट्प्परयुत कीळेकळिप्यलसमन्वितम् ।
कारुकुर्च्यामर्धयुक्तपञ्चमावुसमन्वितम् ॥
तत्तद्दिक्षु स्थितश्रीमद्ग्रामनाङ्कितसीमकम् ।
स्थित दक्षिणवाहिन्या कुल्याया पश्चिमे तटे ॥
कारुकुर्च्या पूर्वनीचवाटिकायास्तु पूर्वत ।
सर्वमान्यतया लब्ध्वा जयन्त्या चन्द्रतारकम् ॥
ग्रामदेवतकु कोनि विडिचिन क्षेत्र अर्धम् ।
श्रीवेङ्कटपतिरायक्षितिपतिवर्यस्य कीर्त्तिधुर्यस्य ।
शासनमिद सुधीजनकुवलयचन्द्रस्य भूमहेन्द्रस्य ॥
वीरवेङ्कटरायोक्त्या प्राह पौत्र समापते ।
कामकोटिसुतो रामकवि शासनवाङ्मयम् ॥
श्रीवीरणाचार्यवरेण्यपौत्रो वराच्युतार्यो गणपार्यपुत्र ।
सूक्त्यालिखद्वेङ्कटरायमौले पद्यानि हृद्यान्यथ शासनस्य ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युत पदम् ॥
स्वदत्ताद्द्विगुण्य पुण्य परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्त निष्फल भवेत् ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
षष्टि वर्षसहस्राणि विष्ठाया जायते क्रिमि ॥
एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोज्या न करग्राह्या विप्रदत्ता वसुधरा ॥

सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविन पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्र. ॥

श्रीवेङ्कटेश ॥

(एपिग्राफिआ इण्डिका—३।२४०-२५१)

---

# (१५०)

## श्रीमदन्नवेममहाराजदत्तवेमपुराग्रहारशासनम्[1] ।

श्रीमान्वराहवपुरावहतु श्रिय वो
येनाशु कौतुकवतोद्वहता धरित्र्या ।
दष्ट्राभिघातपरिकम्पितमेरुशृङ्ग-
निर्मुक्तरत्ननिकरैरुदपादि रेखा ॥

अरविन्दनाभिचरणारविन्दतो जगता हिताय जनिमाप काचन ।
सुरलोकसिन्धुरिव जातिरुज्ज्वला गुणगौरवेण गणनीयजीवना ॥

अभूत्तस्या जातौ गुणगणनिधिः **प्रोलनृपति**
प्रतापाढ्ये यस्मिन्सुरतरुवितार वितरति ।
जना सर्वे सद्यश्च्युतविविधवृत्तिव्यतिकरा'
सम धर्मे कामे मतिमविहता सन्यधिषत ॥

तस्माज्जज्ञे **वेमभूपः** प्रतापी वीर. साक्षान्मूर्त्तिशालीव धर्म ।
दुर्वृत्ताना यो द्विषा निग्रहत्य क्षोणी कृत्वा रामभोज बुभोज ॥

हेमाद्रिणा सप्रतिपादिताना दानव्रताना विधिवद्विधाता ।
निस्सीममुर्वी द्विजसात्स कृत्वा तद्भुक्तशेषा स्वयमन्वभुङ्क्त ॥

मेरुमन्दरकैलासानारुरुक्षुर्महामति ।
सोपानपङ्क्ति श्रीशैले व्यतनोद्वेमभूपति ॥

---

१ एतच्छासनपत्रत्रय E Hultzsch, Ph D महाशयेन Sir Walter Elliot महाशयस्य लेखद्वयात् Dr Fleet महाशयप्रेषितात् सशोध्य प्रकाशितम् शासनसमयस्तु शककाल १२९६ (1218 A D) मित स्फुट एव लिखित

नस्य शासितुरुभौ बभूवतू राममलक्ष्मणनिभौ तनूभवौ ।
अन्नवोतनृपति प्रतापवानन्नवेमनृपतिश्च जित्वर· ॥
पितुरनन्तरमग्र्यगुणोऽग्रज समधिगत्य स राज्यमकण्टकम् ।
वसुमतीमखिला परिपालयन्सुचरितै समचेष्ट महद्यश· ॥
येनाग्रहारा बहवो वितीर्णा हेमाद्रिदानानि कृतानि येन ।
तीर्थेषु सत्राणि ततानि येन येन प्रजा साध्वनुरञ्जिताश्च ॥
तदनन्तरमन्नवेमभूप पितृसिंहासनमुन्नतोऽधिरूढः ।
अखिलानरिभूपतीन्महात्मा सुरसिंहासनमध्यरोहयद्राक् ॥
महादानादिदानाना यस्मिन्सम्यग्विधातरि ।
चिराय तत्तद्विधयश्चरितार्थत्वमाययु ॥
कीर्त्ति दिगम्बरा दृष्ट्वा यस्य प्रियतमा जना ।
एष सर्वस्वमर्थिभ्यो दत्तवानिति मन्वते ॥
सोऽयं वसन्तरायाङ्क कस्तूरीचन्द्रचन्दनै ।
न केवला भुव द्या च क्षिप्तैर्गन्धवतीं व्यधात् ॥
यद्वसन्तोत्सवक्षिप्तभूरिकर्पूररेणुभि ।
यशसा किंतु तस्यासीद्धवल जगता त्रयम् ॥
श्रीपल्लवत्रिनेत्राङ्क श्रीशैलात्पूर्वत स्थितम् ।
श्रीकोण्डवीटिनगर सोऽयं शास्ति परतप ॥
तस्यान्नवेमचन्द्रस्य लक्ष्मीरिव सहोदरा ।
श्रीनल्लनूङ्कभूपस्य महिषी विष्णुतेजस ॥
वेमसानीति विख्याता सप्तसतानशालिनी ।
नित्य हेमाद्रिकल्पोक्तदानव्रतविधायिनी ॥
शाकाब्दे रसरत्नभानु(१२९६)गणिते ग्रस्ते विधौ राहुणा
कार्तिक्या विजयेश्वरस्य पुरत श्रीगौतमीरोधसि ।
विप्रेभ्य परमन्नवेमनृपति श्रीवेमसान्याः स्वसु
पुण्यार्थं नड्डपूरसज्ञमददाद्ग्राम स कोणस्थले ॥

साष्टैश्वर्यं साष्टभोग दत्तो विंशतिभागवान्।
तस्या नाम्नाग्रहारोऽय भाति वेमपुराह्वयः॥

अस्य ग्रामस्य प्रतिग्रहीतार—तल्लाभट्टः, तिप्पयार्यः, दोचयार्य, एते हरितगोत्रा। देवरभट्ट, शिङ्गयभट्ट, माचयार्य', एते कौशिकगोत्रा। मुम्मडियार्य, लक्कनार्य, एतौ श्रीवत्सगोत्रौ। प्रभाकरभट्ट, नागयभट्टः, वासुदेवार्य, एते काश्यपगोत्रा। पेरुमाणिभट्टः, लोहितगोत्र'। राघवभट्ट', कोण्डयार्य', एतौ भारद्वाजगोत्रौ। इम्मडियार्य, आत्रेयगोत्र। अय्यदेवरार्य, मल्लिनाथार्य, एतौ गार्ग्यगोत्रौ। वल्लभार्य, नरहरिभट्ट, एतौ कामकायतगोत्रौ। लक्कनार्य, कौण्डिन्यगोत्र॥ अस्य ग्रामस्य सीमान—तूर्पुनकु मुप्पल्ले पुन्त। आग्नेयानकु। पाञ्चालवरपु मुप्यल्ले रेण्डु पुन्तल कूटमि। दक्षिणानकु। आग्नेयननुण्डि पड्डमccu वोयि अन्तनुत्तर वोयि अनन्तनुण्डि पड्डमccu वोयि अन्तट दक्षिणमुखमैन पुट्टलतोडिकण्डु दुccu मेट्टु पुन्त। अन्दुण्डिगोदावरिदाङ्कानु सेडकोटि मेडितापुन्त। नैर्ऋत्यानकुन्नु पड्डमटिकिन्नि गोदावरि। वायव्यानकु। गोदावरिनुण्डि तूर्पमुखमै वच्चिन गट्टुन्नु प्रेमलकुण्टानु। उत्तरानकु। मेडितापपुन्तानु। कोम्मेपाडानु। अट्टे नल्लम्बल्लि पुन्त। ईशान्यानकुन्नु नलम्वल्लि पुन्त॥

यावन्ति लाङ्गलमुखेन रजासि भूमे-
भांसा निधेर्दुहितुरङ्गजरोमकाणि।
तावन्ति शकरपुरे स युगानि तिष्ठे-
द्भूमिप्रदानमिह य कुरुते मनुष्यः॥
आस्फोटयन्ति पितरो वल्गन्ति च पितामहा'।
भूमिदोऽस्मत्कुले जातो योऽस्मान्सतारयिष्यति॥
स्वदत्ताद्विगुण पुण्य परदत्तानुपालनम्।
परदत्तापहारेण स्वदत्त निष्फल भवेत्॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम्।
षष्टि वर्षसहस्राणि विष्ठाया जायते क्रिमिः॥

सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
इत्थं सर्वान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥
अनवेमभूपति पाञ्चालवरणु वोलमन्दु ईवूरि पोलान गलयनु धार वोसि इच्चिन क्षेत्र खम् ॥

(एपिग्राफिआ इण्डिका—३।२८८–२९१)

---

# (१५१)

## द्वितीयपुलिकेशिन्नपराभिधानश्रीसत्याश्रयमहाराजानां शासनपत्रम् ।

जयति जगतां विधातुस्त्रिविक्रमाक्रान्तसकलभुवनस्य ।
नतन ण ‥ णनखांशुजटिलं पदं विष्णोः ॥

मानव्यसगोत्राणां हारितिपुत्राणां चलुक्यानामन्ववाये वाताप्याः प्रथमविधातुरनेकाध्वरावभृथस्नानसमार्द्रीकृतपुण्यमूर्तेः सर्वमङ्गलायतनस्य वल्लभनृपतेः कीर्त्या युक्तस्य कीर्तिवर्मणः पुत्रः समनुष्ठितपतिदेवताव्रत कमलालयाविपुलपयोधरविलुप्तचन्दनालेपः सुरेन्द्रमन्दिरजातकिन्नराङ्गना-पतीयमानविमलकीर्तिः खरदनकुलिशविभिन्नरिपुहृदयोद्गतरुधिरधारास्नपि-तमस्तकमत्तमातङ्गोदयपर्वततरुणरविः निगृहीतदुष्टजनः परिगृहीतवि-द्वत्सखोऽनुगृहीतभृत्यवर्गः करगतखङ्गोत्कृत्तपरनृपदन्तिदन्तोत्थितवह्नि-शिखोद्दीपितरणभूमिः वरयुवतिनयनसायकैकलक्ष्यो विविधशास्त्रार्थतत्त्व-विचारक्षमसूक्ष्मबुद्धिश्चलुक्यकुलतिलकः सर्वसद्गुणाश्रयो रिपुदरिद्रः श्री-सत्याश्रयोऽनामयः

पदं न्यस्य शत्रूणां शौर्येणोपरि पार्थिवः ।
प्रकृत्या पुंश्चलीं लक्ष्मीं सतीव्रतमकारयत् ॥

---

१ 'अस्य लेखस्याधारभूतं ताम्रपत्रद्वयं पण्डित-भगवानलाल-इन्द्रजि-महाशयेनाहं दर्शितः तदेव स्वीयव्याख्यापत्रसनाथं 'बॉम्बे एशियाटिक् सोसाइटी' मन्त्रिपार्श्वे प्रेषितमासीत् तत्पुस्तकालये व्याख्यापत्ररहितं तदुपलभ्य स्वयं व्याख्याय प्रकाशयामि' इति J. F Fleet महाशयाः

स महीपतिरखरेतिकाविषयवासिन समाज्ञापयति—यथाय मम मातुलः समधिगतार्यमार्गोन्मार्गे स्वविक्रमक्रयक्रीतविशालकीर्तिवितानन‍द्ध-सर्वदिगन्तर· सेन्द्रकाणा तिलकभूत परममाहेश्वर **श्रीवल्लभसेनानन्द-राजः**। तेन राज्ञा मातापित्रोरात्मनश्च पुण्योपचयार्थं आत्रेयसगोत्राय **कृष्णस्वामिसूनवे महेश्वरायेष्टयज्ञाय आम्रवटवकग्राम**·, तथा **वारुवे-न्नायामवञ्चपल्यां** विशतिश्चाटभटदूतराजपुरुषाणामप्रवेशनीयम्—द्वयमे-तत्प्रादात्।

विदिता सन्तु राजान सर्वे मद्वशसभवा.।
अन्ये च पृथिवीपाला. सामन्ताश्च महीतले॥
य कश्चित्पृथिवीपालो भोगमस्य निवर्तयेत्।
महता पातकाना तु कर्तुस्तस्य फल भवेत्॥

उक्त च—

बहुभिर्वसुधा भुक्ता राजभि सगरादिभि।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
षष्टि वर्षसहस्राणि स्वर्गे मोदति भूमिद·।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥
पूर्वदत्ता द्विजातिभ्यो यत्नाद्रक्ष युधिष्ठिर।
मही महीमता श्रेष्ठ दानाच्छ्रेयोनुपालनम्॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम्।
स्वविष्ठाया कृमिर्भूत्वा पितृभि· सह पच्यते॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधु· पुनराददीत॥
फालकृष्टा मही दद्यात्सबीजा सस्यमालिनीम्।
यावत्सूर्यकृतालोकास्तावत्स्वर्गे महीयते॥

स्वस्त्यस्तु लेखकवाचकश्रोतृभ्य। ओम्।

(एपिग्राफिआ इण्डिका—३।५१–५२)

---

# (१९२)

## गुर्जरदेशाधिपतिश्रीगोविन्दराजमहाराजानां शासनपत्रम्[1] ।

ओम् । शकनृपकालातीतसंवत्सरशतेषु सप्तसु पञ्चत्रिंशत्यधिकेषु पौषशुद्धसप्तम्यां अङ्कतोऽपि संवत्सरशतानि ७३५ नन्दनसंवत्सरे पौषशुद्धतिथि ७ अस्यां संवत्सरमासपक्षदिवसपूर्वायां परमभट्टारकमहाराजेन्द्रराजपरमेश्वरः शरच्छशाङ्ककिरणनिर्मलयशोंशुकावगुण्ठितमेदिनीयुवतिभोक्ता प्रभूतवर्षः श्रीवल्लभनरेन्द्रो **गोविन्दराजनामा**

जगत्तुंङ्गतुङ्गतुरगप्रवृद्धरेणूर्ध्वरुद्धरविकिरणम् ।
ग्रीष्मेऽपि नभो निखिलं प्रावृट्कालायते स्पष्टम् ॥
रक्षता येन निःशेषं चतुरम्बुधिसंयुतम् ।
राज्यं धर्मेण लोकानां कृता तुष्टिः परा हृदि ॥
भ्राता तु तस्येन्द्रसमानवीर्यः श्रीमान्भुवि क्ष्मापति**रिन्द्रराजः** ।
शास्ता बभूवाद्भुतकीर्तिसूतिस्तद्दत्त**लाटेश्वर**मण्डलस्य ॥
सूनुर्बभूव खलु तस्य महानुभावः
शास्त्रार्थबोधसुखलालितचित्तवृत्तिः ।
यो गौणनामपरिवारमुवाह पूर्वं
श्री**कर्कराज**सुभगव्यपदेशमुच्चैः ॥
सुवृषस्थोऽनुजस्तस्य सततं सेवितो बुधैः ।
**गोविन्दराजो** भूपालः साक्षाच्छंभुरिवापरः ॥
फलोन्मुखैरापतितैर्विदूरतः समं समन्ताद्गुणपक्षपातिभिः ।
महाहवे दानविधौ च मार्गणैर्न कुण्ठितं यस्य सदैव मानसम् ॥

---

१ लेखस्यास्याधारभूतं ताम्रपत्रत्रयं खानदेशप्रान्तस्थशाहाडेतालुकाया तोरखेडे-'ग्रामवास्तव्य देवराव-बिन-बलवन्तराव-कदम्बाण्डे जाहागीरदार-महाशयात् Mr C G Dodgson I C S (Bombay) महाशयेन प्राप्त मत्सनिधौ प्रेषितमधुना मया-[illegible]' इति J F Fleet I C S Ph D C I E महाशया

२ आर्यानुरोधेन तकारद्वित्व कविना न कृतमासीत्

तद्वत्त सीहरक्खीद्वादशके प्रभुज्यमाने सल्लुकिकविकलङ्कवशप्रसूतो मूर्द्धाभिषिक्तो दुर्वारवैरिवनितातुलतापहेतुरनेकदर्पितारातितरुप्रभञ्जनो मातरिश्वा शरच्छशाङ्ककिरणकुन्दकुसुमस्फटिकावदातसमाननिर्मलयशा. श्रीमणिनागपौत्र श्रीराजादित्यसुतः परमब्रह्मण्य समधिगताशेषमहाशब्दमहासामन्त. । सोऽय श्रीबुद्धवर्षः सर्वानेव भाविभूमिपालाननुबोधयति—

अस्तु व. सविदितम्—यथा मया मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये ऐहिकामुष्मिकफलावाप्त्यर्थं बलिचरुवैश्वदेवाग्निहोत्रक्रतुक्रियाद्युत्सर्पणार्थं बदरसिद्धिचातुर्विद्यसामान्यवाजसनेयमाध्यदिनब्रह्मचारित्रिप्रवरलावायनसगोत्रब्राह्मणसोमाय सर्वदेवपुत्राय, तथा ब्राह्मणनाहरगोत्तमसगोत्रमहेश्वरपुत्र , तथा द्रोणवार्ष्णेयसगोत्रशर्मपुत्र , तथा सोमकात्यायनसगोत्रवप्पुकसुत , तथा लकुटिः आत्रेयसमानसगोत्र. सर्वदेवसुत , तथा सर्वदेवमुद्गलसगोत्र , तथा नेवः, तथा तत्सुतो गोवः, तथा भौल्लः वत्ससगोत्र., तथा द्रोणशर्म , तथा अणहादित्यः, तथा नासेणः, तथा गोवः गोतमसगोत्रो द्रोणसुत', तथा आदित्यः पाराशरसगोत्रः तथा लिम्बादित्यः आत्रेयसमानसगोत्र , तथा योगः शाण्डिल्यसगोत्र., तथा अग्निशर्म , तथा नेवारेवः मुद्गलसगोत्र , तथा नागः माधरसगोत्र , तथा नाणसरः, तथा रेवासमः, तथा भौल्लः यौगनसगोत्र., तथा नेवादित्यः भरद्वाजसगोत्र', तथा ईश्वरः कौषसगोत्र., तथा वप्पस्वामी, तथा गोवशर्मः वार्ष्णेयसगोत्र , तथा शिवादित्यः, तथा देवहटः, तथा सीहः लावायनसगोत्र., तथा नन्हः कात्यायनसगोत्र , तथा मातुशूरः, तथा महेश्वरः आत्रेयसमानसगोत्रः, तेन आत्माशो नैनदौहित्राय दत्त., तथा लल्लः भरद्वाजसगोत्र , तथा तस्यैव भ्राता जज्जुकः, तथा दत्तः शौण्डानसगोत्र., तथा अग्निशर्मा आत्रेयसमानसगोत्र , तथा नेवादित्यः, तथा सम्बीरः कौशसगोत्रः, तथा जज्जुकः वार्ष्णेयसगोत्र , तथा आदित्यः गोतमसगोत्र , तथा आदित्यचीहल्लकः सोमसुत., तथाग्निशर्मा मुद्गलसगोत्रः, तथा रेव आत्रेयसमानसगोत्र ,

सीहरक्खीद्वादशान्तर्गतगोवट्टनाभिधानो ग्राम सहिरण्यादानसदण्डदासापराध ससीमापर्यन्त सतीर्थ, मेलुवल्लीकप्रावेशुक समस्तराजकीयानामहस्तप्रक्षेपणीयो भूमिच्छिद्रन्यायेनाद्य विजयसप्तम्यामुदकातिसर्गेण प्रतिपादित । यतस्ततोऽस्य न कैश्चिद्व्यासेधे प्रवर्तितव्यम् । आगामिभद्रनृपतिभिरप्यनित्यान्यैश्वर्याणि, अस्थिर मानुष्यम्, सामान्य च भूमिदानफलम्, तदपहरणपाप च, अवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्य परिपालनीयश्च । उक्त च महर्षिभि.—

'बहुभिर्वसुधा भुक्ता राजभि सगरादिभि. ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिद ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥' इति ।

ओम् । लिखित मया लेखककृष्णेन नन्नपुत्रेण ॥

(एपिग्राफिआ इण्डिका—३।'१४–५७)

---

## (१५३)

### [१] अल्लयडोड्डराजस्ताम्रपत्रम् ।

लक्ष्मीं पक्ष्मलिता तनोतु भवता लक्ष्मीपति सतत
केलीकोलतनु समस्तजगता रक्षाविधौ दक्षिण. ।
स्नेहार्द्रां धरणीं निजैकरमणीं कर्तुं रसादुद्वह-
स्तत्सश्लेषकुतूहलात्पुलकितो य. स्तब्धरोमाभवत् ॥
अस्तु महो हस्तिमुख स्वस्तिकर व समस्तजनिहेतु ।
यत्कटरटदलिमाला विलसति हरिनीलहारसमलक्ष्मी ॥

---

१ इद ताम्रपत्र **गोदावरी**प्रान्ते **रामचन्द्रपुर**ग्रामत ५ मीलदूरे **कोंकगुड**ग्रामे इष्टिकागर्ते आसीत्, तत्पत्रम् Mr S H Wynne महाशयै Dr Hultzsch महाशयद्वारा मद्रासससंग्रहालये प्रेषितम्, तदादाय G V Ramamurti, B A महाशयवरा प्रकाशितवन्त समयश्चास्य A D 1431 इति.

कलापतेस्ता कलयामि बाला कला कलङ्केन विभिन्नरूपाम् ।
यदन्तरस्यन्दिसुधार्द्रमौलिर्मृत्युंजय पीतविष शिवोऽभूत् ॥

अस्ति प्रशस्तमहिमा पुरुष. प्रमाण-
स्तस्य क्रमान्मुखभुजोरुपदादभूवन् ।
वर्णा द्विजप्रभृतय पदपद्मजाना
वंशेष्वभूज्जगति पण्टकुल प्रतीतम् ॥

तत्रासीन्महितो महीपतिलको मान्य सतामुन्नत-
स्त्यागी दोड्डमहीपति सुकृतवान्पोल्वोलगोत्राग्रणी. ।
दानैर्यस्य विनिर्जितो मतियुतै साम्याय कल्पद्रुमो
मौनी वल्कलसवृत सुरगण भक्त्या भजत्यादरात् ॥

श्रीयन्नबोलप्रभुकोटयाल्लभूमीश्वरास्तस्य सुता प्रसूता. ।
सत्येन सत्वेन जयेन धर्मतनूजभीमार्जुनतुल्यरूपा ॥

तेषा कनिष्ठोऽपि च जन्मनाभूज्ज्येष्ठो गुणैरल्लधरानरेन्द्र. ।
चन्द्रोऽप्यदोषाकरतामुपेत. सौम्योऽपि भूनन्दनता प्रयात. ॥

प्रतापभानौ प्रकट यदीये विजृम्भिते वैरिविलासिनीनाम् ।
मुखाम्बुजातानि मुहु स्वकीया विकासलीला विसृजन्ति चित्रम् ॥

शचीव शक्रस्य शिवेव शभो पद्मेव सा पद्मविलोचनस्य ।
वेमाम्बिका चोडकुलेन्दुभीमभूपात्मजाभून्महितास्य जाया ॥

श्रीवेमभूमीश्वरवीरभद्रभूनाथदोड्डक्षितिपान्नभूपा ।
अल्लाडभूपस्य सुता अभूवन्गुणैर्यथा पङ्क्तिरथस्य पुत्रा ॥

गुणै स तेषा निजजन्मना च ज्यायानभूदल्लयवेमभूप ।
रामो यथा रम्यगुणाभिराम. स्वसोदराणा निजभक्तिभाजाम् ॥

वेमप्रभो राजमहेन्द्रनामा रामाभिरामाजनि राजधानी ।
अनेकमातङ्गतुरङ्गपूर्णा शशाङ्कसकाशविराजिसौधा ॥

धर्मानुन्नमयन्रिपून्विनमयन्राज्यश्रिय वर्धय-
न्पाप संशमयन्प्रजाश्च रमयन्विद्वज्जनान्स्थापयन् ।

कीर्तिं संरचयन्दिशासु निखिलक्षोणीभृतामाश्रयो
  राजा राजमहेन्द्रनामनगरे वेमेश्वरो जृम्भते ॥
तस्यानुजो राजमहेन्द्रराज्यपट्टाभिषिक्तो विलसत्प्रताप ।
त्यागश्रिया संभृतवीरभद्र श्रीवीरभद्रक्षितिपो विभाति ॥
  अल्लनृपवीरभद्रं विभवसमुद्र वितीर्णतरुभद्रम् ।
  पूजामोदितरुद्र बलजितबलभद्रमाहुरतिभद्रम् ॥
  आकारजितजयन्तौ जगति जयन्तौ द्विषोश्वरेवन्तौ ।
  अमितदयागुणदान्तौ वेमेश्वरवीरभद्रभूकान्तौ ॥
राज्ञोस्तयो रम्यगुणोऽनुजात श्रीदोड्डभूपो विजितारिभूपः ।
विभाति कर्पूरवसन्तराय सग्रामभीमो जगनीब्बगण्ड ॥
आनम्रक्षितिपालकम्रमुकुटप्रप्रोतनानामणि-
  च्छायाबालरविप्रभापटलिकादीव्यत्पदाम्भोरुह ।
दिक्कान्ताकुचचन्दनायितयश सपूर्णरोदोऽन्तभू-
  रल्लादक्षितिपात्मजो विजयते दोड्डक्षमानायक ॥
धारामण्डलभञ्जनीसुरडिकाख्यातेऽत्र दोड्डप्रभौ
  वाह लङ्घयति द्विधा त्रिगुणिताष्टारत्निमात्रा भुवम् ।
चित्र किं नु तदीयकीर्तिरबलारोहत्यहो दिग्गजा-
  न्सूर्याश्वान्विषमानुपर्युपरि च प्रक्रीडति प्रत्यहम् ॥
  भुवनत्रितये धवले विशदैर्यत्कीर्तिपूरकर्पूरै ।
  चित्र चकोरयूना दिवापि संभवति चन्द्रिकामोद ॥
घाटीघोटिखुराग्रखण्डितमहीधूलीकरालीकृत-
  प्रान्तभ्रान्तनतारिवीरपटले श्रीदोड्डभूमीश्वरे ।
चित्र शत्रुनृपा निमज्य विमले तत्खड्गधाराजले
  प्रोन्मज्जन्त्यमराङ्गनाकुचतटीसघट्टिगङ्गाजले ॥
कदाचिदर्धोदयपुण्यकाले दोड्डक्षितीशोऽर्चितपार्वतीशः ।
दानानि रम्याणि विधाय गङ्गातटेऽग्रहारानपि दातुमैच्छत् ॥

श्रीशाके करबाणविश्वगणिते साधारणे वत्सरे
पौषेऽर्धोदयनाम्नि पुण्यसमये कौन्तेयगङ्गातटे ।
ग्राम गुम्पिणिनामक सहलिकं सैश्वर्यभोगाष्टक
विप्रेभ्योल्लपदोड्डभूपतिरदादाचन्द्रमातारकम् ॥

अनवरतक्रतुरचनासमोदितभूमिदेवदेवेन्द्रम् ।
त ग्राम निजनाम्ना कृतवानल्लाडरेड्डिदोड्डवरम् ॥

वृत्तिमन्तो द्विजवरा लिख्यन्ते साप्रत क्रमात् ।
अत्राग्रहारतिलके सर्वेऽप्येकैकभागिन ॥ ~

ब्रह्मा यजुषि शास्त्राणा व्याख्याता नृपपूजितः ।
गौतम श्रीशिङ्गयज्वपेरुमाडिमखी सुखी ॥
षड्दर्शनीव्याक्रियाभिर्जिह्वा यस्य विजृम्भते ।
पन्नालकोम्मयप्राज्ञ कौण्डिन्यो यजुरुज्ज्वल ॥
श्रीशिङ्गमद्वेदिपौत्रो मीमासाशब्दतर्कभू ।
साहित्यसीमा हरित. शिङ्गयार्यो महोदय' ॥
षड्दर्शन्यादिविद्याना यस्य जिह्वा विहारभूः ।
मल्लावमाधवसुधी. कौण्डिन्यो यजुषा पड्डु' ॥
मीमासामासल' शब्दपटुतर्केऽपि कर्कश' ।
आत्रेयो यजुषि प्रौढ. श्रीक 'भरत सुधीः ॥
षड्दर्शनी नर्तकीवजिह्वाग्रे यस्य नृत्यति ।
इड्डुवुश्रीमल्लुभट्ट शौनको यजुषा निधि ॥
व्याख्याताखिलशास्त्राणामन्नदो राजपूजित ।
हरितो गुडिमेट्टश्रीसर्ववेदेवमखीश्वर ॥
असोर्यामकृतः पुत्र कोत्तुरप्पययज्वन ।
विद्यान्वित' श्रीर्हरित श्रीमामिडिमखी सुखी ॥
वेदशास्त्रपुराणेषु वेदव्यास इवापरः ।
वैष्णव. काश्यपो वल्लभार्यनारायणः सुधीः ॥

विद्योतन्ते मुखे यस्य विद्या' सर्वा विजृम्भिता ।
**सरस्वतीमोलुभट्ट** कौण्डिन्यो राजपूजित ॥
साङ्गाग्रवेदनिशित. शास्त्रकाव्यादिभव्यधी ।
चरित्रेण च गोत्रेण वसिष्ठो **रामय** सुधीः ॥
भारद्वाजोऽग्रवेदाग्र्य क्रमधाडीगुणार्णव ।
श्रीमा**नन्नमयज्वेन्द्र शिङ्गयार्यः** स दीक्षितः ॥
ययुर्जटादेशचर्चाद्यवधानप्रचण्डधी ।
श्रीये " यावधानीन्द्र कौण्डिन्योऽप्ययवर्यभू' ॥
चित्रावधानी यजुषि शौनको **विस्सयार्यभू**' ।
**इङ्गुवुश्रीमञ्चनावधानीन्द्रो** मखदीक्षित ॥
यजु सामार्णवौ येन निपीतौ कपिगोत्रभू ।
**गुण्टूरिनागयद्वेदी** साध्वरौद्गात्रभाग्यवान् ॥
गोलपल्यप्पयार्याब्धिचन्द्र श्रीवत्सगोत्रज ।
**अनन्तार्यः** साङ्गयजुष्यापस्तम्ब इवापर ॥
**पोनुङ्गोटिपोतिभट्टो** यजु'क्रमविशारद ।
आत्रेय सुयशा मानी **पोतयार्य**तनूभव. ॥
कौशिक' श्रीया**दवानिनरहर्यार्य**गोपयः ।
अग्रवेदक्रमावृत्तिभाग्यवानाश्वलायनः ॥
**वेल्धेविश्रीकेशवार्यः** काश्यप **शिङ्गयात्मजः** ।
श्रीमान्साङ्गयजुर्ब्रह्मा गुणी सर्वोपकारकः ॥
श्रीवत्स श्री**कन्दुगुलमाधवार्य**सुतो**ऽप्पयः** ।
यजु'क्रमप्रौढियुक्तो दाता श्रीमान्गुणप्रिय' ॥
कौण्डिन्य श्री**वोनगिरिमाधवार्या**ब्धिचन्द्रमा. ।
**नृसिहशिष्टः** सुजनो यजुर्वेदचतुर्मुख ॥
**श्रीयाकुनूरिनागार्यशिष्टो** विष्णुतनूभवः ।
यजुरस्खलिता वृत्ति. कौशिको विनयोन्नतः ॥

पामलपाटिनरहरिर्धीर श्रीरामयार्यतनुजात ।
कौशिकगौत्रो गुणवान्यजुरावृत्त्या समस्तबुधनन्द्य. ॥
हरितः कलुवकश्रीवल्लभद्वेदिशेखर ।
प्रतापवानृग्यजुषो पूर्तक्रुन्मल्लयात्मज ॥
श्रीयंपदौभलद्वेदी हरितो गङ्गयार्यजः ।
ऋग्यजु.श्रौतशास्त्रज्ञ सलक्षणजटापटु ॥
भारद्वाजो देवरपुनरहर्यार्यनन्दन ।
शूराध्येता यजुर्वेदे श्रीमान्गणपति सुधी ॥
सुन्दिलकृष्णभट्टस्य सुतो नरहरि सुधी. ।
भारद्वाजो यजुर्वेदपटुराचार्यकीर्तिमान् ॥
भारद्वाज पेद्दयार्य कोल्लूरंनमभट्टज. ।
रम्याग्रवेदनिपुणो दयावान्दीक्षितो महान् ॥
काश्यप श्रीशिङ्गरेमीय· · यार्यतनूभव ।
पोतयार्यो यजुर्वेदमहावृत्तिमता वर ॥
श्रीकोगण्टिकोटार्यपुत्र शाण्डिल्यगोत्रजः ।
माचनार्यो यजुर्वेदजटावल्लभनामवान् ॥
श्रीकोण्डयपेद्दार्यसत्पुत्रो हरितान्वयः ।
श्रीयल्लाडार्यविप्रेन्द्रो यजुर्वेदविदा वर· ॥
आदित्यार्यसुतः शुद्धभारद्वाजो यजुःपटुः ।
श्रीमान्बोन्दिलपाटिश्रीपेद्दयार्यो महायशा ॥
श्रीमानपूरिदेचार्यपुत्रो गङ्गयकोविद ।
आत्रेयो यजुरावृत्तिविख्यातो विप्रनन्दितः ॥
कोन्दादिपोचनार्यस्य सूनुरात्रेयगोत्रज. ।
श्रीपोतनार्यो गुणवानद्वितीयो यजु क्रमे ॥
गौतमश्रीकामयार्यतनयो नयभूषण ।
श्रीतम्मयार्यो मतिमान्यजुरध्यापकोत्तम ॥

**राम्पल्लिकूचनार्यस्य** सूनुः श्रीवत्सगोत्रज ।
**तिप्पयार्यो** यजु प्रौढ शब्दकाव्यादिभव्यधी. ॥
शाण्डिल्यो जल्लिपल्लिश्री**शिङ्गयार्य**सुत कृती ।
स्वप्नेऽप्यभङ्गाध्ययन **प्रोलयार्यो** यजु क्रमे ॥
रम्योदयो **राजुकोण्डपेद्दिभट्टो** यजु कृती ।
यास्कान्वयो गौतमार्यजात सर्वज्ञतान्वित ॥
वसिष्ठश्चोटिपेद्दिश्रीमल्लयार्यतनूभव ।
जल्लिपल्लिनृसिहार्यो यजु श्रुतिविशारद' ॥
ऋग्वेदाध्ययने दक्षो **वल्लूरिमञ्चनात्मज** ।
भारद्वाज **शिङ्गयार्यः** सपदुन्नतकीर्तिमान् ॥
वङ्कुण्टलकामार्यगर्भपुण्योदय सुखी ।
भारद्वाजो वल्लभार्यश्रौती यजुषि शातधी ॥
**नल्लूरिश्रीमल्लयार्यो** मल्लयार्यतनूभव ।
वाधूलो ब्राह्मणवृत्तियुक्त ऋग्वेदपारग. ॥
**श्रीयर्तङ्कुरिकामार्यो** भारद्वाज सुलक्षण' ।
यजुर्वेदालय. पुत्रो वल्लभार्यस्य वल्लभ ॥
उण्डूकोण्डलपेद्दार्यकुमारो गौतमान्वय ।
**श्रीयन्नमार्यो** विनयी यजु श्रुतिविशारद' ॥
कौण्डिन्य कञ्चरे पल्लिनारायणतनूभव ।
यजुरावृत्तिसिह **श्रीनरसिहसुधीः** सुधी' ॥
हरितो मारटूरिश्रीकृष्णमार्यशुभोदय ।
अध्वर्यु[ ] श्रुतिविख्यात**स्तिप्पनार्यो** दयापर ॥
भारद्वाज सुब्रुवीटियल्लयार्यप्रियात्मजः ।
**श्रीमाचनार्यो** यजुषि क्रमावृत्तिविचित्रधी ॥
काश्यपो विश्रुतोऽध्वर्यु' श्रुतौ **मल्लेलगङ्गनः** ।
श्रीमल्लयार्यसजातो धैर्यगाम्भीर्यभूषित ॥

श्रीकोण्डश्रीनृसिंहार्यतनयः श्रीदयान्वितः ।
**चिट्टनार्यः** कण्वगोत्रो यजुर्वेदधुरंधरः ॥
**श्रीमण्डवेल्लिनागार्य**तनयः **केशवः** सुधीः ।
काश्यपो निशितः शुक्लयजुर्वेदे गुणोन्नतः ॥
काश्यपो **मण्डवेल्लिश्रीवल्लभार्य**सुतः कृती ।
विद्वाञ्शतपथी **कामयार्यः** शुक्लयजुः पटुः ॥
**गुडिवाडांनमार्य**स्य कुमारः कौशिकान्वयः ।
**पोतार्यः** शुक्लयजुषा कान्तः शान्तो गुणप्रियः ॥
**नून्तकिश्रीगङ्गनार्य**गर्भरत्नमुदारधीः ।
कौण्डिन्यः **सूरयबुधः** सशुक्लयजुरञ्चितः ॥
गुणी कलमः ख्यातकोम्मयामात्यनन्दनः ।
कौण्डिन्यो **माचमन्त्रीशो** राजकार्यधुरंधरः ॥
**वल्लूरय्यलुमन्त्रीशो** गुणवान्कीर्तिभूषणः ।
आपस्तम्बो राजमान्यः कौण्डिन्यः शिवभक्तिमान् ॥
**गुडियश्रीशिङ्गनार्यः** कौण्डिन्यो यजुषा पटुः ।
विद्वान्सगीतसाहित्यशास्त्रमार्गविचक्षणः ॥
**श्रीवोन्ताप्पयविप्रेन्द्रः** कौण्डिन्यो राजवल्लभः ।
प्रियवादी यशोहारी सुखवान्सुजनप्रियः ॥
मौनभार्गवगोत्रः श्रीकेसपार्यतनूभवः ।
**येऌवश्रीगोपणार्यो** गुणवान(ा)श्वलायनः ॥
**चेऌवुश्रीयप्पयार्य**तनयो **विस्सयाह्वयः** ।
काश्यपान्वयसंजातो यजुर्वेदी महामतिः ॥
प्रसन्नवल्लभहरेर्ब्रह्मनागेश्वरस्य च ।
अत्राग्रहारे ललिते दत्तं वृत्तिद्वयं द्वयोः ॥
अग्रहारवरस्यास्य ग्रामग्रासार्थमुत्सुकः ।
प्रादादन्नवरग्रामं कृत्स्नं श्रीदोड्डभूपतिः ॥

औभळामात्यतनय नारनाख्यस्य मन्त्रिण ।
खण्डिकान्नवरेऽत्रास्ति सार्धखारिचतुष्टयम् ॥
अस्य ग्रामस्य सीमानो दिक्षु पूर्वादिषु क्रमात् ।
सर्वेषा सुप्रबोधाय लिख्यन्ते देशभाषया ॥

"अल्लाडरेडिडदोड्डवरपु सीमानिर्णयमु । ईशान्यादि कौन्तेयमध्यमादि दक्षिणमुखमै धरिमीद पुन्तदण्डनु पलवेलपोलसधि नन्दिकम्बाननुण्डि कोन्तमेर वच्चि मेडितापवक दक्षिणमुखमै कोन्तमेर वच्चिमळ्ळियु मेडितापवङ्कनु पश्चिममुखमै कोन्तमेर वच्चि राप्पटि दक्षिणमुखमै नावुलकु वच्चि आपुन्ते पट्टि वखङ्कलदाङ्का वच्चि माळ्ळि पड्डमळ्ळ मुखमै ताळळकु वच्चि कोटिकि वेळिळ आनड्डस पट्टकोनि आग्नेयमुखमै कोन्तमेर वच्चि तूळ्ळुपु मुखमै रावुल पुन्तने कलसि चक्का दक्षिणमुखमै ऊरिवाकिटि तूळ्ळुपु पड्डमटिल गलसि तूळ्ळुपुमुखमै कोन्तमेर वच्चि दक्षिणमुखमै रेण्डु पेद्दतुम्मल नड्डमङ्गानु रेण्डूळळ नड्डमु वाङ्गु वट्टु कोनि चिन्तलतू ळ्ळ पुनङ्गा देवरपल्लि ऊरि मुदटि वयटिकि वेळिळ पुट्टचायकु वच्चेनु तूर्पुसीमकु अन्तनुण्डि दक्षिणसीमकु पश्चिममुखमै ऊरि दक्षिणपु पुन्तनड्डमु वट्टुङ्कोनि वखङ्कल पुट्टकु—" [इत्यादि देशभाषया ।]

आरामैरभिरामैर्भूदेवै. सपन्मनोहरै. ।
आदिकुन्तातटे भाति ग्रामो **दोड्डवरो** महान् ॥

अल्लाडभूमीश्वर**दोड्डभूपो** भविष्यत प्रार्थयते नृपालान् ।
ममैष धर्म. परिपालनीय सौजन्यतो वा सुकृतेच्छया वा ॥

स्वदत्ताद्द्विगुण पुण्य परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्त निष्फल भवेत् ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युत पदम् ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
षष्टिं वर्षसहस्राणि विष्ठाया जायते क्रुमि. ॥

एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोग्या न करग्राह्या विप्रदत्ता वसुंधरा ॥
गामेका रत्निकामेका भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥

(एपिग्राफिआ इण्डिका—५ । ५७-६६)

---

## (१५४)

## वीरचोडमहीपतेस्ताम्रपत्रम्[१] ।

श्रीमाञ्जगत्त्रयमिदं हरिरादिदेवः
स्रष्टुं विरञ्चिमसृजन्निजनाभिपद्मात् ।
तस्मादभूत्किल महामुनिरत्त्रिरत्त्रेः
सोमो महेश्वरशिखान्तकृतप्रतिष्ठः ॥

तस्माद्बुधस्ततश्चक्रवर्ती पुरूरवास्तस्मादायुस्ततो नहुषस्ततो ययातिस्ततः पूरुस्ततो जनमेजयस्ततः प्राचीशस्ततः सैन्ययातिस्ततो हयपतिस्ततः सार्वभौमस्ततो जयसेनस्ततो महाभौमस्तस्मादैशानकस्ततः क्रौधाननस्ततो देवकिस्तस्मादृभुकस्तस्मादृक्षकस्ततो मतिवरस्ततः कात्यायनस्ततो नीलस्ततो दुष्यन्तस्ततो भरतस्ततो भूमन्युस्ततो हस्ती ततो विरोचनस्तस्मादजमीलस्ततः संवरणस्ततः सुधन्वा ततः परिक्षित्ततो भीमसेनस्ततः प्रदीपनस्ततः शंतनुस्ततो विचित्रवीर्यस्ततः पाण्डुराजस्ततः पाण्डवास्तेषु वशकरादर्जुनादभिमन्युस्ततः परिक्षित्ततो जनमेजयस्ततः क्षेमुकस्ततो नरवाहनस्ततः शतानीकस्तस्मादुदयनस्ततः

---

१ एतदाधारभूतं ताम्रपत्रं **मद्रासप्रदर्शिन्या** Dr. Hultzsch महाशयसमीपे प्रेषितम्, तदेव च पिठुपुरराजेन Mr. D. F. Carmichael चीफ्सिक्टरमहाशयोपान्ते प्रहितम्, तेन च तत्परीक्षायै Dr. Burnell महाशयवरनिकटे प्रेषितम्. तदेवादाय H. Krishna Shashtri B. A. महाशयेन प्रकाशितम्. समयश्चास्य शकसंवत् १००१ (A. D. 1079) स्फुट एव.

प्रभृत्यवच्छिन्नसंतानेष्वयोध्यासिंहासनासीनेष्वेकान्नषष्टिचक्रवर्तिषु गतेषु तद्वंश्यो **विजयादित्यो** नाम राजा विजिगीषया दक्षिणापथ गत्वा त्रिलोचनपल्लवमधिक्षिप्य दैवदुरीहया लोकान्तरमगमत् । तस्मिन्सकुले पुरोहितेन वृद्धामात्यैश्च सार्धमन्तर्वत्नी तस्य महादेवी **मुडिवेमु**नामाग्रहारमुपगम्य तद्वास्तव्येन **विष्णुभट्ट**सोमयाजिना दुहितृनिर्विशेषमभिरक्षिता सती **विष्णुवर्धनं** नन्दनमसूत । सा च तस्य कुमारकस्य कुलक्रमोचितानि कर्माणि कारयित्वा तमवर्धयत् । स च मात्रा विदितवृत्तान्तो निर्गत्य चलुक्यगिरौ नन्दा भगवतीं गौरीमाराध्य कुमारनारायणमातृगणांश्च सतर्प्य श्वेतातपत्रैकशङ्खपञ्चहमशब्दादीनि कुलक्रमागतानि निक्षिप्तानीव साम्राज्यचिह्नानि समादाय कडम्बगङ्गादिभूमिपान्निर्जित्य सेतुनर्मदामध्य दक्षिणापथ पालयामास ।

तस्यासीद्विजयादित्यो विष्णुवर्धनभूपते ।
पल्लवान्वयजाताया महादेव्याश्च नन्दन ।

तत्सुत **पुलकेशिवल्लभः** । तत्पुत्र **कीर्तिवर्मा** तस्य तनयः श्रीमता सकलभुवनसस्तूयमानमानव्यसगोत्राणा हारीतिपुत्राणा कौशिकीवरप्रसादलब्धराज्यानामश्वमेधावभृथस्नानपवित्रीकृतवपुषा चालुक्याना कुलमलकरिष्णो **सत्याश्रयवल्लभेन्द्रस्य** भ्राता **कुब्जविष्णुवर्धनो**ऽष्टादश वर्षाणि वेङ्गिदेशमपालयत् । तत्सुतो **जयसिंहवल्लभ**स्त्रयस्त्रिशतम् । तदनु **इन्द्रभट्टारकः** सप्त दिनानि, तत्सुतो **विष्णुवर्धनो** नव वर्षाणि, तत्सूनुर्**मङ्गियुवराजः** पञ्चविंशतिम्, तत्पुत्रो **जयसिंह**स्त्रयोदश, तदवरज **कोक्किलिः** षण्मासान्, तस्य भ्राता **विष्णुवर्धन**स्तमुच्चाट्य सप्तत्रिंशत वर्षाणि, तत्पुत्रो **विजयादित्यो**ऽष्टादश, तत्तनयो विष्णुवर्धन. षट्त्रिशतम्, तत्सुतो नरेन्द्रमृगराजोऽष्टाचत्वारिंशतम्, तत्सुतो **विष्णुवर्धनः** षट्त्रिंशतम्, तत्सुतो **नरेन्द्रमृगराजो**ऽष्टाचत्वारिशतम्, तत्सुत **कलिविष्णुवर्धनो**ऽध्यर्धवर्षम्, तत्सुतो **गुणगविजयादित्य**श्चत्वारिंशत वर्षाणि, तद्भ्रातुर्विक्रमादित्यस्य तनयश्चालुक्यभीम**स्त्रिशतम्, तत्सुत **कोल्लभिगण्डविजयादित्यः** षण्मासान्, तत्सुतो**ऽम्मराजः** सप्त वर्षाणि, तत्तनय बालमुच्चाट्य **ताडपो** मासमेकम्, तं जित्वा **विक्रमादित्य** एकादश मासान्, तत्ताडपराजसुतो **युद्धमल्लः**

सप्त, तमुच्चाट्य देशादम्मराजानुजो **राजभीमो** द्वादशम्, तत्सूनुर**म्मराजः** पञ्चविंशतिम्, तस्य द्वैमातुरो **दाननृप**स्त्रीणि, ततः सप्तविंशति वर्षाणि दैवदूरीहया वेङ्गिमहिरनायकाभवत्। ततो दानार्णवसुतः **शक्तिवर्मनृपो** द्वादशवर्षाणि भुवमपालयत्।

ततस्तदनुजः सप्त वत्सरान्भूतवत्सलः।
**विमलादित्य**भूपालः पालयामास मेदिनीम्॥

तत्तनयो नयशाली जयलक्ष्मीधाम **राजराजनरेन्द्रः**।
चत्वारिंशतमब्दानेकं च पुनर्महीमपालयदखिलाम्॥

यो रूपेण मनोभवं विशदया कान्त्या कलानां निधिं
भोगेनापि पुरंदरं विपुलया लक्ष्म्या च लक्ष्मीधरम्।
भीमं भीमभुजाबलेन विहसन्भाति स्म भास्वद्यशाः
श्रीमत्सोमकुलैकभूषणमणिर्दीनैकचिन्तामणिः॥

राजासावनुरूपरूपविभवामम्मङ्गनाम्ना भुवि
प्रख्यातामुपयच्छत स्म विधिवद्देवीं जगत्पावनीम्।
या जह्नोरिव जाह्नवी हिमवतो गौरीव लक्ष्मीरिव
क्षीरोदाद्रविवंशवंशतिलकाद्राजेन्द्रचोडादभूत्॥

पुत्रस्तयोरभवदप्रतिघातशक्ति-
निःशेषितारिनिवहो महनीयकीर्तिः।
गङ्गाधराद्रिसुतयोरिव कार्तिकेयो
राजेन्द्रचोड इति राजकुलप्रदीपः॥

भासामुन्नतिहेतुं प्रथमं वेङ्गीश्वरत्वमध्यास्य।
यस्तेजसा दिगन्तानाक्रमति सहस्रभानुरुदयमिव॥

उद्यच्चण्डतरप्रतापदहनप्लुष्टाखिलद्वेषिणा
सर्वान्केरलपाण्ड्यकुन्तलमुखान्निर्जित्य देशान्बलात्।
आज्ञा मौलिषु भूभृतां भयरुजा चित्तेषु दुर्मेधसां
प्रीतिः सत्सु दिशासु कीर्तिरतुला येनार्पितो जृम्भते॥

भोगीशाभीलभोगप्रतिमनिजभुजा भार्तिसतात्यन्तविम्य-
　　न्नानाभूपाललोकप्रहितबहुविधानर्घरत्नाभिरामम् ।
धत्ते मौलिं परार्ध्यो महति नृपकुले य' कुलोत्तुङ्गदेवो
　　देवेन्द्रत्वादनूने सुरपतिमहिमा चोडराज्येऽभिषिक्त ॥
हस्तभ्राजितशङ्खचक्रजलज य राजनारायण
　　लोक स्तौति स सूर्यवशतिलकाद्राजेन्द्रदेवार्णवात् ।
संभूता मधुरान्तकीर्तिविदिता नाम्नापरेण स्वय
　　लक्ष्मीमुद्वपति स लोकमहिता देवी जगत्पावनीम् ॥
गाङ्गौघा इव निर्मला' कृततमोध्वसा दिनेशा इव
　　क्षोणीन्ध्रा इव भूभरश्रमसहाजातास्तयो सूनव ।
तन्मध्ये नयविक्रमैकनिलय श्रीराजराज प्रति
　　प्रीत्या वाचमिमामवोचत पिता सर्वोर्वराधीश्वरः ॥
　　वत्स वेङ्गीमहीराज्य मया दिग्विजयैषिणा ।
　　मत्पितृव्ये पुरा न्यस्त विजयादित्यभूभुजि ॥
　　स च पञ्चदशाब्दानि पञ्चाननपराक्रम ।
　　मही रक्षन्महीनाथो दिव देवोपमो गत. ॥
　　कुलक्रमगता धीर धुर वेङ्गीभुवो वह ।
　　बाला अपि स्वकार्येषु क्षमास्तेजस्विन खलु ॥
　　इत्युक्त्वा ता धुर दत्ता गुरुणा चक्रवर्त्तिना ।
　　प्रसह्य तद्वियोगोऽपि विनयाद्वहति स्म स' ॥
श्रीपादसेवासुखतो गुरूणा न जातु राज्य सुखमित्यवेक्ष्य ।
सरक्ष्य वेङ्गीभुवमेकमब्द भूय स पित्रोरगमत्समीपम् ॥
　　तदनुजमथ धीर वीरचोडं कुमारं
　　　　गुणमिव तनुबद्ध विक्रम चक्रवर्ती ।
　　उदयमिव रविस्त्व प्राप्य वङ्गीश्वरत्व
　　　　वितनु शिरसि पाद भूभृतामित्यवोचत् ॥

इत्याशिष समुपगम्य नृपादवन्ध्या
मातुस्तदग्रजनृपद्वितयात्क्रमेण।
आनम्य तामवरजै प्रणतः कुमार'
सृष्टः स्वदेशगमनाय स तै कथंचित्॥

शत्रुध्वान्तमपास्य राजनिकरानाच्छाद्य धाम्ना परा-
न्दुर्वृत्तान्विनिवर्त्य भूकमलिनीं कृत्वा तथा नन्दिनीम्।
प्रारूढो जननाथनामनगरी हर्म्योदयाद्रिर्विभु-
र्वेङ्गीभूतलभूषण नृपसुतो बालार्कबिम्बद्युतिः॥

शाकाब्दे शशिखाम्बरेन्दुगणिते सिंहाधिरूढे रवौ
चन्द्रे वृद्धिमति त्रयोदशतिथौ वारे गुरोर्वृश्चिके।
लग्नेऽथ श्रवणे समस्तजगतीराज्याभिषिक्तो मुदे
लोकस्योद्वहति स पट्टमनघ श्रीवीरचोडो नृपः॥

यो दीनकोटिमभिवाञ्छितवस्तुदानैर्भीतानुपाश्रितभयापनुदा भुजेन।
रक्षन्समस्तभुवनाश्रयनामसार्धं धत्ते प्रजाश्च निजधर्मपरिग्रहेण॥

भूलोकादुदिता महोन्नतिमती दिङ्मण्डलव्यापिनी
सक्रान्ताखिलसत्पथा परिगता लोकानथोर्ध्वानपि।
सन्मार्गाच्चलिता भुवीह पतिता पश्चादधोगामिनी
गङ्गा कीर्तिरमङ्गलप्रमथिनी यस्यातिशेतेतराम्॥

त्यक्त्वा भूभारखेदं फणिपतिरचल पाति पाताललोक
सर्वा निर्व्याकुलासीत्परकुपतिपरित्यागिनी मेदिनी च।
लक्ष्मीभाजा द्विजानामपि मखनिवहैर्नन्दित देववृन्दै-
रित्थ त्रैलोक्यमेतद्ध्रुवमतिमुदित यत्र भूभारभाजि॥

अक्षता यो महीं रक्षन्गुरुणा चक्रवर्तिना।
आहुतो यौवनोद्दामदेहालक्ष्मीदिदृक्षया॥

कान्ति नवामनुदिन नयनाभिरामा
पुष्णन्तमिन्दुमिव यं तरुण नृपेन्द्रः।

पश्यन्नतृप्तनयनोऽप्यथ पञ्चमाब्दे
प्रास्थापयत्पुनरुदीच्यजयाय सूनुम् ॥

स सर्वलोकाश्रय श्रीविष्णुवर्धनमहाराजाधिराजो राजपरमेश्वर· परमभट्टारक परमब्रह्मण्य श्रीवीरचोडोदेवः प्रोलुनाण्डुविषयनिवासिनो राष्ट्रकूटप्रमुखान्कुटुम्बिन सर्वान्समाहूय मन्त्रिपुरोहितसेनापतियुवराजदौवारिकसमक्षमित्थमाज्ञापयति। यथा—

वेदाना परिरक्षणे कृतमतिर्देवादिदेवस्तप-
स्तद्ब्रह्म सजनयाबभूव भगवान् ब्राह्मणान्।
यैराश्चर्यमहानुभावभवनैरग्नौ यथा चोदित
साय प्रातरिहार्पितेन हविषा जीवन्ति देवा दिवि ॥

दुष्टो जात्या प्रकृत्या कलुषितहृदय क्रूरकर्मापि येषा-
मेक विप्र प्रसाद्य प्रशमितदुरित स्वर्गमाप्तस्त्रिशङ्कु ।
राज्ञा वशे विराजन्बहुसुकृतबलाद्देवराज्येऽभिषिक्तो
येषामेकस्य कोपात्प्रभुरपि नहुष पातितो नाकलोकात् ॥

आज्ञाविधेयानि भवन्ति यस्य जगन्ति सर्वाणि स चन्द्रमौलि ।
विधाय येषा विधिवत्सपर्या त्रिलोकनाथस्त्रिपुर विजिग्ये ॥

येषा प्रभावेण सहस्रधामा रक्षासि सध्याद्वितये विधूय ।
विभाति निर्विघ्नवियत्प्रचारो जगन्ति रक्षञ्जगदेकचक्षु ॥

वशेषु तेषामृषिपुगवाना विख्यातभूदेवकुलोत्तमेषु ।
प्रशस्तवाक्याः शुभलक्षणाङ्गा ये भान्ति वेदा इव मूर्तिमन्त ॥

ये वाङ्मयाम्भोनिधिसारतत्त्वज्ञानोज्ज्वलत्कौस्तुभरत्नभासा ।
कृतप्रकाश हृदयं दधाना विभान्ति विष्णोरिव मूर्तिवेदा· ॥

ते नामतो गोत्रतश्च निरूप्यन्ते—तत्र तावद्विराममूर्तिराचारनिधिरस्मत्पुरोहितो भागद्वयवान् चोडभट्ट, श्रीकृष्णभट्ट, श्रीधरभट्टः, आच्चभण्डारभट्ट·, श्रीकृष्णभट्ट, सर्वदेवभट्टसोमयाजी, केशवभट्ट, तिरुवरङ्गमुडयान्भट्ट·, यज्ञात्मभट्ट·, नारसिंहभट्ट·, तिरुवरङ्गमुडयान्भट्ट·, तिरु-

मलमुडयान्भट्ट', सज्जनभट्ट', श्रीधरभट्ट', माधवभट्टः, श्रीरामभट्ट', कडलुसि''''कालभट्ट', केशवभट्ट, नारसिंहभट्ट, केशवभट्ट', वेन्नकूतभट्टः, वामनभट्ट', सर्वदेवभट्ट, श्रीरङ्गशायिभट्टः, गोविन्दभट्ट', वेन्नयषडङ्गवित्, नन्दिकुमारभट्टः, तिरुमलमुडयान्भट्ट, श्रीवासुदेवभट्ट', सोमदेवभट्टः, दामोदरभट्ट., जान्नियत्रिवेदी, नित्यानन्दत्रिवेदी, नारायणषडङ्गवित्, कामियषडङ्गवित्, आरुलालदशपुरिभट्ट, गङ्गाधरभट्ट', आरुलालभट्ट', श्रीकृष्णभट्ट., माधवभट्ट, तिरुमलमुडयान्भट्ट, वामनभट्ट, माधवभट्ट', नारायणषडङ्गवित्, श्रीरङ्गनाथभट्ट', तिल्लनायकभट्ट, विष्णुभट्ट', तिरुवरङ्गसहस्र', विष्णुभट्ट', नारायणभट्ट, पार्थसारथि., नारायणभट्ट', वेन्नकूतभट्ट, कुमारस्वामिभट्ट, नागदत्तभट्ट, कुप्पयभट्ट, नगदोनयभट्ट, अम्बलताडिभट्ट, चेन्दामरकण्णभट्ट, श्रीकृष्णभट्ट., तिरुवेङ्गसहस्रः, नारायणभट्ट, त्रिविक्रमभट्ट, गोविदभट्ट', पोतियभट्ट., जातवेदियभट्ट', श्रीकृष्णभट्ट, श्रीरामसहस्र., सिंहपिरान्सहस्र, कुमारस्वामिभट्ट, गुण्डदेवभट्ट, दोनयभट्ट., श्रीनारसिंहभट्ट, वामनभट्टः, वेन्नकूतसहस्रः, नारायणसहस्र', पोनयसहस्र, श्रीरामभट्टः, केशवभट्टः, कामयसहस्र., दोनयभट्ट, श्रीरामभट्ट', दक्षिणामूर्तिभट्ट, लक्ष्मीधरभट्ट', नारायणभट्टः, सोमदेवभट्ट', नारायणभट्ट, केशवभट्ट', नारायणभट्टः, तिरुवरङ्गनारायणसहस्र', दामोदरभट्ट, मावयभट्ट, वामयभट्टः, तिरुमलमुडयान्भट्ट, गङ्गाधरभट्ट', श्रीगरुडभट्ट, माधवभट्ट, तिरुमलमुडयान्भट्ट', आलसहस्रः, विष्णुभट्ट, नागदेवसहस्र, पोन्नयसहस्र', श्रीधरभट्टः, तणियपेरुमान्सहस्र', श्रीकैलाशमुडयान्सहस्र, आलवन्दान्भट्टः, पिट्टयभट्ट', घृताशिभट्ट', आरामुदुभट्ट, श्रीकृष्णभट्ट, गङ्गाधरभट्ट., गोविन्दसहस्र, नारायणभट्ट, श्रीधरभट्टः, नारायणभट्ट., नारायणभट्ट, इत्येकोनविंशत्युत्तरशतसङ्ख्या भारद्वाजगोत्रजाः। गोविन्दभट्ट', कुमारस्वामिभट्टः, यज्ञात्मभट्टसोमयाजी, ताडिकुमारभट्ट', विष्णुभट्ट, दोनयभट्ट', करियकोसहस्र', नारायणभट्ट', दोनयभट्ट', इति सङ्कृतिगोत्रजा नव। श्रीकृष्णभट्ट, दोड्डियभट्ट., तिरुवरङ्गमुडयान्भट्टः, दोनयभट्ट., त्रिविक्रमभट्ट., वेन्नकूत-

भट्टः, गङ्गाधरभट्टः, दामयषडङ्गवित्, गोविन्दभट्टः, उलहमुण्डान्भट्टः, श्रीरङ्गनाथभट्ट, कुमारस्वामिभट्ट, नारायणभट्ट, माधवभट्टः, तिरुमलमुडयान्भट्ट, विष्णुभट्ट, मावनभट्ट, चोडियषडङ्गवित्, दोनयभट्ट, नारायणभट्ट, कोलवामनभट्ट, अत्ताडिभट्ट, अत्तामभट्ट, दामोदरभट्ट, सीरलङ्गोभट्टः, अडहियमणवालुभट्ट, आदित्यभट्टः, दोनियसहस्रः, कुमारपेरुमान्भट्ट, तिरुप्पनङ्गाडभट्ट, शिवदेवभट्ट, भीमनाथभट्ट, गोविन्दभट्ट, यज्ञदोणभट्ट, उत्तरीश्वरषडङ्गवित्, अत्ताडिभट्ट, शकरनारायणभट्ट, विष्णुसहस्र, श्रीरामभट्ट, वासुदेवभट्ट, चेल्वसहस्रः, मधुसूदनभट्ट, नारायणभट्ट, श्रीरामभट्ट, माधवभट्ट, इति पञ्चोत्तरचत्वारिंशत्काश्यपगोत्रजाः। शभुभट्ट, कुमारस्वामिभट्ट, विष्णुभट्ट, माधवभट्ट, देवकुमारभट्ट, विद्द्यषडङ्गवित्, मलहिनियनिण्ड्रान्भट्ट, श्रीकृष्णभट्ट, अरुलारभट्ट, यज्ञमूर्तिभट्ट, दोनियत्रिवेदिभट्ट, रेमनषडङ्गवित्, श्रीधरषडङ्गवित्, माधवभट्ट, कामयत्रिवेदी, कुमारस्वामिभट्ट, श्रीकुमारभट्ट, शकरषडङ्गवित्, अय्यपिरान्सहस्रः, नामयभट्ट, वेण्णकूतभट्टः, ईश्वरभट्ट, दोनयषडङ्गवित्, शकरनारायणभट्ट, तिरुमलमुडयान्भट्टः, हृषीकेशभट्टः, श्रीधरभट्ट, आकोण्डविलभट्ट, केशवभट्ट, अरुलारसहस्रः, तिरुनीलकण्ठभट्ट, तिरुवाकुलमुडयान्सहस्रः, यज्ञदोणभट्ट, सिग्गपिरान्भट्ट, तिण्डयसहस्र, कोलवामनसहस्र, सुन्दरतोलुडयान्सहस्रः, नारायणभट्ट, वेण्णकूतसहस्र, चन्द्रशेखरभट्ट, नम्बियाण्डानुभट्ट, कामयभट्टः, श्रीधरसहस्र, विद्द्यभट्टः, मावियषडङ्गवित्, दामोदरसहस्रः, सीरलङ्गोभट्ट, चेल्वयभट्ट, कन्दयसहस्र, रुद्रसहस्र, चि··· पाण्डान्भट्टः, सोमयाजी, पेरियाण्डान्भट्टसोमयाजी, श्रीरामभट्ट, पेरियानम्बिभट्ट, इति हरितगोत्रजाः पञ्चोत्तरपञ्चाशत्। नारायणभट्ट, गङ्गाधरभट्ट, नारायणभट्टः, श्रीरामदशपुरिभट्ट, सीरलङ्गोभट्ट, सर्वदेवभट्टः, श्रीवासुदेवभट्टः, मेडयभट्ट, पोतियषडङ्गवित्, मनत्तुक्किनियान्भट्ट, भास्करभट्टः, ए - सेवकभट्ट, मेडयषडङ्गवित्, नीलकण्ठभट्टः, तिरिवलमुडयान्भट्ट, माधवभट्टः, उलहमुण्डान्भट्ट, जन्नयसहस्रः, श्रीहनुमत्सहस्र, अप्पयभट्टः,

वेन्नयभट्टः, तेवडिसहस्रः, शंकरसहस्रः, तिरुमलमुडयान्भट्टः, पेरियाण्डान्भट्टः, श्रीधरभट्टः, श्रीरामभट्टः, शिवदेभट्टः, आदित्यषडङ्गवित्, दामोदरभट्टः, वासुदेवभट्टः, जातवेदिभट्टः, माधवषडङ्गवित्, अत्तियषडङ्गवित्, नन्दिकुमारभट्टः, केशवभट्टः, वीट्टिरिन्दान्भट्टः, आयिरञ्जोतिसहस्रः, भट्टदेवभट्टः, वामनभट्टः, दामोदरभट्टः, पेरियाण्डान्भट्टः, कुमारस्वामिभट्टः, दामंयसहस्रः, अडिहनम्बिचतुर्वेदिभट्टः, श्रीवेदव्यासभट्टः, इति कौशिकगोत्रजा अष्टोत्तरचत्वारिंशत् । श्रीगरुडदशपुरीयभट्टः, वेण्णकूतभट्टः, इति द्वौ गर्गगोत्रजौ । रेमयभट्टः, अरुलारदशपुरीयभट्टः, चन्द्रशेखरभट्टः, भीमनाथभट्टः, आरामदुभट्टः, श्रीकृष्णदशपुरीयभट्टः, तिरुवरङ्गमुडयान्भट्टः, आदित्यभट्टः, इत्यष्टौ वाधूलगोत्रजाः । श्रीकृष्णभट्टः, श्रीकृष्णभट्टः, इति द्वौ कपिगोत्रजौ । यज्ञमूर्तिभट्टः, दारयषडङ्गवित्, दोनयत्रिवेदी, भीमयभट्टः, इति चत्वारः कुत्सगोत्रजाः । श्रीकृष्णभट्टः, नारायणभट्टः, यज्ञकेशवभट्टः, केशवभट्टः, श्रीकुमारभट्टः, सूर्यदेवभट्टः, श्रीकृष्णभट्टः, वासुदेवभट्टः, इत्यष्टौ बादरायणगोत्रजाः । तिरुवरङ्गदेवभट्टः, सर्वदेवभट्टः, श्रीरामभट्टः, सर्वदेवभट्टः, वेण्णकूतभट्टः, श्रीधरभट्टः, श्रीकृष्णसहस्रः, कामियषडङ्गवित् वीट्टीरिन्दान्भट्टः, कोवाण्डान्भट्टः, मनत्तिकिनियान्सहस्रः, इत्येकादश लोहितगोत्रजाः । श्रीकृष्णभट्टः, श्रीकृष्णभट्टः, नारायणभट्टः, इति त्रयः कामकायनगोत्रजाः । श्रीरामभट्टः, श्रीकृष्णभट्टः, परमेश्वरभट्टः, यज्ञस्कन्दभट्टः, देवदेवेशभट्टः, मधुसूदनभट्टः, माधवभट्टः, श्रीरामभट्टः, वासुदेवभट्टः, विष्णुभट्टः, रुद्रभट्टः, दोनयभट्टः, दक्षिणामूर्तिभट्टः, यज्ञात्मभट्टः, कुमारस्वामिभट्टः, श्रीरामभट्टः, शीरलङ्गोभट्टः, शंकरनारायणभट्टः, यज्ञमूर्तिभट्टसोमयाजी, दामोदरभट्टः, श्रीवासुदेवभट्टः, नारायणभट्टः, भीमेश्वरभट्टः, दोनयभट्टः, सुब्रह्मण्यभट्टः, अरुलारभट्टः, तिरिमलमुडयान्भट्टः, वासुदेवभट्टः, दामोदरभट्टः, श्रीकृष्णभट्टः, सूर्यदेवभट्टः, वासुदेवभट्टः, माधवभट्टः, सिङ्गपिरान्सहस्रः, वेण्णकूतसहस्रः, अरुलारसहस्रः, पद्मनाभभट्टः, दक्षिणामूर्तिभट्टः, श्रीरामदेवभट्टः, सिङ्गपिरान्भट्टः, श्रीकृष्णसहस्रः, ईश्वरभट्टः, माधवसहस्रः, अरस-

ब्रह्मा, जनार्दनभट्ट', माधवभट्ट, दारयभट्ट, अरुलारसहस्र', तिरवरङ्ग-मुडयान्सहस्र, तिरिवायिक्कुलमुडयान्सहस्र', नारायणभट्ट, पुरुषोत्तम-भट्ट, पोन्नयसहस्र, नारायणभट्ट, नित्यानन्दभट्ट, सोमदेवभट्ट', पार्थ-सारथिभट्टसोमयाजी, विद्यमट्ट, सीरलङ्गोवभट्ट, निरवद्यभट्ट', वाजपे-ययाजी भागद्वयवान्, इति षष्टि कुण्डिनगोत्रजा' । दत्तत्रिवेदिभट्ट, केशवभट्ट, तिरुवेङ्कडभट्ट, रमण्डयभट्ट, ईश्वरभट्ट, वेमनभट्ट, अत्ति-यारालिभट्ट, वेन्नयभट्ट, वेण्णकूतभट्ट, षष्ठिरुद्रभट्ट, केशवभट्ट, मणि-नागभट्ट, श्रीकृष्णभट्ट, विष्णुदोनयभट्ट, कुमारस्वामिसहस्र, दक्षिणा-मूर्तिभट्ट, दामोदरभट्ट, कामकोटसहस्र, तेरुपोलियनिङ्गान्सहस्र, श्री-वासुदेवसहस्र, श्रीरामभट्ट, माधवभट्ट, शकरनारायणसहस्र, सिङ्गपि-रान्सहस्र, रच्चेनषडङ्गवित्, आरामदुभट्ट, दोनयसहस्रदक्षिणामूर्तिभट्ट, सोमयभट्ट, इत्यात्रेयगोत्रजास्त्रिंशत् । पेरुबु क्कडलभट्ट सोमयाजी, आरामदुभट्ट, केशवभट्ट., गोविन्दभट्ट, इति चत्वारो रथितरगोत्रजा । श्रीधरभट्ट, शकरनारायणभट्ट, लल्कोण्डवेल्लिभट्ट, नारायणभट्टसोम-याजी, तिरुकु ' गुडिभट्ट, तिरुवरङ्गनारायणभट्ट, तिरिवायिक्कुलमुडया-न्भट्ट', माधवभट्ट, पल्लिगोण्डान्भट्ट, यज्ञमूर्तिभट्ट., नारायणभट्टसोम-याजी, शेखरभट्ट, श्रीरामभट्ट., तिरिवाकुलमुडयान्भट्ट, गङ्गाधरभट्ट, श्रीरङ्गनाथभट्ट, रुद्रकुमारभट्ट., श्रीरामभट्ट, पोतयषडङ्गवित्, वेण्णकू-तभट्ट', नारायणभट्टः, वेमयषडङ्गवित्, अप्पयषडङ्गवित्, माधवभट्ट', श्रीरामभट्ट, श्रीरामभट्ट, सुब्रह्मण्यभट्ट, श्रीरामभट्ट, केशवभट्ट, पुरुषो-त्तमभट्ट, नारायणसहस्र', दक्षिणामूर्तिभट्ट., वेण्णकूतभट्ट', सोमनाथ-भट्ट, तिरिवायिक्कुलमुडयान्भट्ट', सिङ्गपिरान्भट्ट, ईश्वरसहस्र', नाराय-णसहस्र', श्रीभरतसहस्रः, श्रीकृष्णभट्ट, दक्षिणामूर्तिभट्टः, केशवसहस्र, तिरुवरङ्गमुडयान्भट्ट, तिरुप्यनङ्गाडुसहस्र., सीरलङ्गोसहस्र., दक्षिणामू-र्तिभट्ट, गोविन्दभट्ट., केशवभट्टः, त्रिविक्रमभट्ट, रा यपोतषडङ्गवित्, श्रीधरभट्ट, शकरनारायणभट्ट, आदित्यदेवभट्ट', नारायणभट्ट., श्रीधरभट्ट., दोनयभट्ट', भीमायभट्ट., केशवभट्ट', पद्मनाभभट्ट', गङ्गाधरभट्ट, इत्ये-

कोत्तरषष्ठिर्वत्सगोत्रजा । मण्डयभट्ट, त्रिविक्रमभट्ट, रुद्रकुमारभट्ट., सिङ्गपिरान्भट्ट, आलिदेवयभट्ट, पद्मनाभभट्ट, नारायणभट्ट, तिरुवरङ्गमुडयान्भट्ट, श्रीधरभट्ट, मणिनागभट्ट, विष्णुभट्ट, श्रीरामभट्टः, नारायणभट्ट, तिरिप्पोरिभट्ट, तिरिमलुडयान्सहस्र, वामनभट्ट, कोण्डयसहस्र, आदित्यदेवसहस्र, इत्यष्टादश गौतमगोत्रजा । अडशियमणवालभट्ट, तिरुपनङ्गडभट्ट, माधवभट्ट, दोनयसहस्र, वामनभट्ट, केशवसहस्र, गोविन्दसहस्र, कुमारस्वामिभट्ट, अरुलारभट्ट, इति वसिष्ठगोत्रजा नव । कुमारस्वामिभट्ट, श्रीधरभट्ट, श्रीभरतभट्ट, दामोदरभट्ट, कुमारस्वामिभट्ट, आण्डमणिभट्ट, दामोदरभट्ट, भागद्वयवान् करिमाक्यभट्ट, इति अष्ट नितुन्दिगोत्रजा. । दोनयषडङ्गवित्, कोण्डयषडङ्गवित्, जन्नयभट्ट, जन्नयषडङ्गवित्, दोनयभट्ट, जनार्दनषडङ्गवित्, इति शालावतगोत्रजा. षट् । यज्ञात्मभट्टसोमयाजी, श्रीकृष्णभट्ट, गोविन्दभट्ट, श्रीभरतभट्ट, इति चत्वारो विश्वामित्रगोत्रजा । सूर्यदेवसहस्र, अप्ययभट्ट, केशवभट्ट, कुलोत्तुङ्गचोडब्रह्ममहाराज., सेनापती राजराजब्रह्मराजो भागचतुष्टयवान्, कुमारनारायणब्रह्मराजो भागद्वयवान्, दिवाकरभट्ट, नडविरुकुङ्कालकालभट्ट, केशवभट्ट, इति मुद्गलगोत्रजा नव, नारायणसहस्र, प्रबोधशिवपण्डितो भागद्वयवान्, इति द्वौ वालखिल्यगोत्रजौ । दामोदरभट्टसोमयाजी, दुग्गयभट्ट, तिरुनाण्डुडयान्भट्ट, आण्डमाणिभट्ट., इति चत्वार. शटगोत्रजा । वासुदेवभट्ट, वेण्णकूतसहस्र., नारायणभट्ट, इति शाण्डिल्यगोत्रजास्त्रयः । निम्बदेवभट्ट, इत्येको विष्णुवृद्ध । नारायणभट्ट, गोविन्दभट्ट, श्रीकृष्णभट्ट, इति त्रय. पाराशर्यगोत्रजा । इति षट्त्रिंशदुत्तरपञ्चशतसख्येभ्य षट्कर्मनिरतेभ्यो न्यूनाधिकभावेन चतुश्चत्वारिंशदधिकपञ्चशतसख्यान्भागान्परिकल्प्य भवद्विषये द्वादशपूण्डिसहितमालवेल्लिनामग्राम **पोन्नतो** 'नामग्रामश्च उत्तरवरुसविषये आलमिनामग्रामश्चेति ग्रामत्रयमेकीकृत्य **श्रीवीरचोड**चतुर्वेदिमङ्गलनाम्ना सुप्रतिष्ठाग्रहारीकृत्य प्रतिसवत्सरमत्र प्रतिभाग सार्धं निष्क करं परिकल्प्य यदतोऽन्यत्सिद्धाया वेण्डायाभिनवादिकं यच्च कोड-

''शुक्लनामक यच्च वणिग्भ्य' पूर्णोपजीविभ्यश्च राजग्राह्य तत्सर्व परिहृत्य सर्वकरपरिहारेण धारापूर्वकमस्माभिराचन्द्रार्कमुत्तरायणनिमित्ते दत्तमिति विदितमस्तु व । अस्य ग्रामसीमान —दक्षिणत पोन्नवाड्यु मल्लभ्रोल्लुनु सीमा, पश्चिमत कोल्लिप्रोल्लुनु चेम्ब्रोल्लुनु सीमा, उत्तरत पोलकुम्ब नु डङ्कलपूण्डिनि बेण्डपूण्डिनि सीमान क्षेत्रसीमान, पूर्वत समुद्र, आग्नेया दिशि पोन्नवाड पोलमुनीपूरि पोलमु गूडिन चोटि मोवलि तोडि इसुकमेट्टयुदीनि पङ्गुमटि रिट्टग्रानि तोडि ताङ्डनु सीमा । (इत्यग्रे देशभाषा ।) अत्र व्याकरण व्याचक्षाणस्य वृत्त्यर्थं भाग एक, मीमासाव्याख्यात्रे द्वौ, वेदान्त व्याख्यातुरेक, ऋग्वेदमध्यापयितुरेक, यजुर्वेदमध्यापयितुरेक, सामानि गापयितुरेक', रूपावतार व्याचक्षाणस्यैक, पुराण वाचयितुरेक, वैद्यस्यैक, अम्बष्ठस्यैक, विषवादिन एक, ज्योतिर्विद एक, इति गुणवृत्तिभागा द्वादश, ग्राममध्यमधिवसते **विष्णुभट्टारकाय** भागौ द्वौ, पश्चिम दिग्भागमधिवसते च द्वौ, **श्रीकैलासदेवाय** द्वौ, इतराभ्यो **वासुदेवताभ्यः** एक, इति सप्तदेवभागा । अस्योपरि न केनचिद्बाधा कर्तव्या । य करोति स पञ्चभिर्महापातकैर्युक्तो भवति । तथा चोक्त भगवता व्यासेन—

स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
षष्टिं वर्षसहस्राणि विष्ठाया जायते कृमि' ॥
गामेका स्वर्णमेक वा भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसप्लवम् ॥
बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

श्रीविजयराज्यसवत्सरे त्र्युत्तरविंशतिसवत्सरे दत्तस्यास्य शासनस्याज्ञप्ति पञ्चप्रधाना । काव्यकर्ता विद्यभट्ट । लेखक पेन्नाचार्य ।

(एपिग्राफिआ इण्डिका—५ । ७४-९४)

---

(१५५)

श्रीमज्जायमहाराजानां शिलालेखः[1]।

स्वस्ति श्री।

जयति हरिवराह प्रेमसंभ्रान्तपृथ्वी-
स्तनभरपरिरम्भारम्भहृष्टस्य यस्य।
पुलकचुलुकिताम्भःसंचयस्तोयराशि
पुनरविरलनिर्यत्स्वेदपूरैरपूरि॥

हेरम्बस्य विकल्पदन्तमुकुलं गौरीहरस्योत्सव-
प्रत्यासन्नविलासदीपकलिका गङ्गामृणालाङ्कुर।
देवस्य त्रिपुरद्रुहो विजयिना पुष्पेषुणा मस्तके
विन्यस्ताङ्कुशविभ्रमा विजयते चूडासुधांशो. कला॥

पायाद्वः परिवर्तमानलहरीप्राग्भारमास्फालय-
न्सायकालतरगकेलिषु करास्कन्देन मन्दाकिनी।
देवस्यारभटीपरिभ्रमकलासरम्भसभाविनः
शभोरम्बुमृदङ्गवाद्यरचनारम्भाय लम्बोदर.॥

हसा. पद्मासनारूढा यदन्त. समुपासते।
परामृतरसस्यन्दि स्रोतः सारस्वतं स्तुम॥

प्राचीवधूमुखविशेषकपद्मरागः
प्रख्यायते हि भगवानरविन्दबन्धु.।
यत्र श्रुतिप्रणयधामनि सनिधत्ते
देवो हिरण्मयवपु पुरुष' पुराण॥

मनुरंशुमतोऽस्य सूनुरासीद्यत एवाभ्युदिता. स्वभावशुद्धा.।
निगमादिव सर्वधर्मचर्यास्तुहिनाद्रेरिव राजहसवंशाः॥

---

१ 'अय हि शिलालेख कृष्णापरिगणान्तर्गतवापट्लातालुके चेब्रोलुग्रामीयनागेश्वरमन्दिरगोपुरस्थस्तम्भयोर्दक्षिणस्तम्भस्य परित उत्कीर्णो वर्तते,' इति E Hultzsch Ph D महाशया प्रकाशका अस्य शकसवत् ११३५ (1213 A D.)

तस्मादिक्ष्वाकुरासीत्तदुपरि सगरस्तत्परस्तात्ककुत्स्थ-
स्तस्मादूर्ध्वं दिलीपस्तमनु दशरथस्तत्सुतो रामचन्द्रः ।
यद्वीरश्रीविलासा बिससमतुलितोदग्रकैलासजाग्र-
द्दो क्रीडातुङ्गलङ्कासुभटविघटनास्ते दिगन्ते प्रथन्ते ॥
एषा वंशे रघूणा क्षितिपतिरभवद्दुर्जयः शौर्यकेलि-
स्फूर्जद्भूमा ततोऽभूत्प्रतिकरटिघटाशातनो वेतराजः ।
चक्रे विक्रान्तबाहुस्तदनु वसुमतीपालन प्रोलभूप-
स्तत्पुत्रो रुद्रदेवस्तदुपरि च नृपोत्तसरत्न बभूव ॥
ततस्तत्सोदर्य स्वभुजधृतसाम्राज्यमहिमा
महादेवक्षोणीरमण इति गीतस्त्रिभुवने ।
अभूत्सेवानम्रक्षितिपतिशिरोमण्डनमणि-
प्रभाभिर्यत्पादाम्बुरुहमकरन्दव्यतिकर ॥
अथ गणपतिदेव प्रादुरासीदमुष्मा-
त्सुरतरुरिव सिन्धो. श्लाघ्यविश्राणनश्री ।
विहरति फणिभर्तु श्वासखेदादपेता
सुरभिमलयजार्द्रे यद्भुजे भूतधात्री ॥
यस्य प्रस्थानभेरीमुखरितहिमवद्गह्वर सैन्यघोष
श्रुत्वा प्रत्यर्थिकान्ता प्रशिथिलकबरीभारबद्धा समन्तात् ।
झञ्झावाताबधूतध्वनितजलधरव्यूहसक्षोभरिङ्ख-
न्निर्घाताघातभीतप्रसृमरचमरीविभ्रमा विभ्रमन्ति ॥
मा त्व मर्दय मद्रनाथ पुरत पाञ्चाल मुञ्चान्तर
मार्ग देहि विदेहभूप पदवी हम्मीर किं वार्यते ।
हूण क्षीणगतिं जहीहि गमने काशीन्द्र का सान्द्रता
यस्य द्वारि विजृम्भते चिरमिति क्ष्मापालकोलाहल. ॥
वर्धते खलु वसुधरापतेस्तस्य सिन्धुरचमूधुरधर ।
जायनः सकलनाट्यवैदिकग्रामणी कविसभाशिखामणि. ॥

यत्कीर्तिगीतचतुरास्त्रिदशेन्द्रकन्या
शुद्धान्तसौधशिखरेषु पुलोमजाया ।
तामिस्त्रपक्षरजनीष्वपि चन्द्रिकाभि
क्रीडाचकोरमिथुनानि विलोभयन्ते ॥

यत्त्यागाद्भुतनिर्जितैरिव पय सर्वस्वमुन्मुच्य तै-
र्यत्र क्वापि पलायितेऽपि शरदारम्भे महाम्भोधरै ।
यत्सेनाकरिमल्लगल्लफलकश्रेणीषु लब्धास्पदा
वृष्टिर्यत्प्रतिपक्षपक्ष्मलदृशा नेत्रारविन्देषु च ॥

एते पुरा न क्षितिपालपुत्रा सरक्षिता सयति दन्तदष्टै ।
इतीव यद्वैरिविलासहर्म्यैस्तृणप्ररोहा शिरसा ध्रियन्ते ॥

सुतनु वदनकान्तिं वाससः पल्लवेन
स्थगय सलिलपूरैर्दुर्गम वर्त्म मा भूत् ।
इति गिरिमधिगच्छन्यस्य शत्रुक्षितीश
कथयति निजकान्ता चन्द्रकान्तस्थलीषु ॥

मन्त्री कार्यनिरूपणे प्रियसुहृद्विश्रम्भसभाषणे
काव्यारम्भविधौ कविः सहचर सगीतसपादने ।
कर्ता शिल्पकलाकलापविषये सप्रेषणे किंकरो
युद्धे यश्छलमत्तिगण्डनृपतेरग्रेसरो वर्तते ॥

अथैकदा दक्षिणदिक्क्षितीशान्विजित्य वीरो विनिवर्तमान ।
मध्येपथ ताम्रपुरीमयासीच्चञ्चत्पताका छलमत्तिगण्डः ॥

पञ्चत्रिंशदुपेतरुद्रशत(११३५)[1]सख्याते शकाब्दे मधौ
मासि श्रीमुखवत्सरे स नृपति' श्रीजायसेनाभृते ।
पूर्वं तावकमातृमातुलभुजासरक्षिता षाण्मुखी-
मद्यारभ्य मदाज्ञया पुरमिमा त्व पालयस्वेत्यदात् ॥

अथ स सकलप्रासादाना प्रणष्टशिलेष्टका-[2]
प्रभृति सकलद्रव्य नव्य विधाय समन्तत ।

१ A D 1213 २ 'नशे पान्तस्य' (८।४।३६) इति पाणिनिसूत्रेण णत्व निषेधादत्र 'प्रनष्ट' इति बोध्यम्

यश इव सुधालेप तत्र प्रकाश्य ततः पर
कनककलशव्यूह स्वस्य प्रतापमिव न्यधात् ॥
स खलु सकलाङ्गभाज कनकमयीमकृत तारकाराते. ।
प्रतिकृतिमसुररणाङ्गणविहरणयोग्य तनुत्रमिव ॥
सर्वोपचारसिद्ध्यर्थमस्य यत्रापरिच्छदम् ।
सौवर्ण राजत ताम्र कास्य च बहुधा व्यधात् ॥
महाय लोहप्रतिमा महीयसी स तस्य देव्यौ च विधाय तादृशौ ।
प्राकारमुच्च शनिमण्टप[1] महत्त्रिभूमिक गोपुरमप्यकल्पयत् ॥
अथैतस्याकार्षीत्प्रतिमकरसक्रान्तिदिवस
महाखेटक्रीडाश्रमविधुतये मण्डपमसौ ।
यदालेख्ये लेखैरवसरसमेतै सपुलक
विभाव्यन्ते देवासुरसमरसरम्भरचना. ॥
मूलस्थानस्य लिङ्गस्य काडुविट्टेश्वरस्य च ।
नवप्रतिष्ठामकरोद्दस्युभि परिभूतयो ॥
दुर्ग च ताम्रनगरीमभितो व्यधत्त
प्राकारमुन्नतमुदञ्चितगोपुर सः ।
आभाति येन हरसूनुविनिर्जितेन
क्रौञ्चेन सा शिखरिणा परिसेवितेव ॥
गामेका रत्निकामेका भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसप्लवम् ॥
स्वदत्ता परदत्ता वा यत्नाद्रक्ष युधिष्ठिर ।
महीं महीभृता श्रेष्ठ दानाच्छ्रेयोनुपालनम् ॥
स्वसुकृतपरिपालनात्प्रभूणा परकृतपालनमेव धर्महेतुः ।
हरिरपि कमलासनस्य सृष्टिं सततमवज्जगतामभूदुपास्यः ॥

---

१ 'मण्टप' इति स्यात्

इद रक्षिष्यता राज्ञा यशश्चन्द्रिकया सह ।
चिर जायचमूपस्य धर्मचन्द्र प्रवर्धते ॥

(एपिग्राफिआ इण्डिका—५।१४३ १४८)

---

# (१५६)

## तृतीयकृष्णमहाराजानां दानपत्रम् ।

ॐ

स जयति जगदुत्सवप्रवेशप्रथनपर करपल्लवो मुरारे. ।
लसदमृतपय कणाङ्कलक्ष्मीस्तनकलशाननलब्धसनिवेश ॥
जयति च गिरिजाकपोलबिम्बादधिगतपत्रविचित्रतासभित्ति ।
त्रिपुरविजयिन प्रियोपरोधाद्धृतमदनाभयदानशासनेव ॥
श्रीमानस्ति नभस्तलैकतिलकस्त्रैलोक्यनेत्रोत्सवो
देवो मन्मथबान्धव' कुमुदिनीनाथः सुधादीधिति ।
नि.शेषामरतर्पणार्पिततनुप्रक्षीणतालक्ष्ते-
र्यस्याश शिरसा गुणप्रियतया नून धृत शभुना ॥
तस्माद्विकासनपर. कुमुदावलीना दोषान्धकारदलन. परिपूरिताश. ।
ज्योत्स्नाप्रवाह इव दर्शितशुद्धपक्षः प्रावर्तत क्षितितले क्षितिपालवश. ॥
अभवदतुलकान्तिस्तत्र मुक्तामणीना
गण इव यदुवशो दुग्धसिन्धूयमाने ।
अधिगतहरिनीलप्रोल्लसन्नायकश्री-
रशिथिलगुणसङ्गो भूषण यो भुवोऽभूत् ॥
उद्वृत्तदैत्यकुलकन्दलशान्तिहेतु-
स्तत्रावतारमकरोत्पुरुष पुराणः ।

---

१ इद दानपत्र नागपुरसमीपवर्ति'वर्धा'नगराद्दशमीलदूरे नैर्ऋत्यकोणीयदेवलीग्राम स्थकूपे समुपलब्धम्, इति R G Bhândârkaı, M A, Ph D, C I E महाशयवरा प्रकाशितवन्त शकसवत् ८६२ (A D 940-41)

तद्वंशजा जगति सात्यकिवर्गभाज-
स्तुङ्गा इति क्षितिभुज प्रथिता बभूवु ॥
क्षितितलतिलकस्तदन्वये च क्षतरिपुदन्तिघटोऽजनिष्ट रट्ट ।
तमनु च सुतराष्ट्रकूटनाम्ना भुवि विदितोऽजनि राष्ट्रकूटवश ॥
तस्मादरातिवनिताकुचचारुहार-
नीहारभानुरुदगादिह दन्तिदुर्गः ।
एक चकार चतुरब्ध्युपकण्ठसीम-
क्षेत्र य एतदसिलाङ्गलभिन्नदुर्ग ॥
तस्मादपालयदिमा वसुधा पितृव्य
श्रीकृष्णराजनृपति शरदभ्रशुभ्रै ।
यत्कारितेश्वरगृहैर्वसुमत्यनेक-
कैलासशैलनिचितेव चिर विभाति ॥
गोविन्दराज इति तस्य बभूव नाम्ना
सूनु. स भोगभरभङ्गुरराज्यचिन्त
आत्मानुजे निरुपमे विनिवेश्य सम्य-
क्साम्राज्यमीश्वरपद शिथिलीचकार ॥
श्वेतातपत्रत्रितयेन्दुबिम्बलीलोदयाद्रे कलिवल्लभाख्यात् ।
तत कृतारातिमदेभभङ्गो जातो जगत्तुङ्गमृगाधिराज' ॥
तत्सूनुरानतनृपो नृपतुङ्गदेवः
सोऽभूत्स्वसैन्यभरभङ्गुरिताहिराजः ।
यो मान्यखेटममरेन्द्रपुरोपहासि
गीर्वाणगर्वमिव खर्वयितु व्यधत्त ॥
तस्योत्तर्जितगूर्जरो हृतहटल्लासोद्भटश्रीमदो
गौडाना विनयव्रतार्पणगुरु सामुद्रनिद्राहर ।
द्वारस्थाङ्गकलिङ्गगाङ्गमगधैरभ्यर्चिताज्ञश्चिर
सूनुः सूनृतवाग्भुव. परिवृढ. श्रीकृष्णराजोऽभवत् ॥

अभूज्जगत्तुङ्ग इति प्रसिद्धस्तदङ्गजः स्त्रीनयनामृतांशुः।
अलब्धराज्यः स दिवं विनिन्ये दिव्याङ्गनाप्रार्थनयेव धात्रा ॥

तन्नन्दनः क्षितिमपालयदिन्द्रराजो
यद्रूपसंभवपराभवभीरुणेव।
मानात्पुरैव मदनेन पिनाकपाणि-
कोपाग्निना निजतनुः क्रियते स्म भस्म ॥

तस्मादमोघवर्षो रौद्रधनुर्भङ्गजनितबलमहिमा।
राम इव रामणीयकमहानिधिर्दशरथाज्जातः ॥

क्षिप्रं दिवं पितुरिव प्रणयाद्गतस्य
तस्यानुजो मनुजलोकललामभूतः।
राज्यं दधे मदनसौख्यविलासकन्दो
गोविन्दराज इति विश्रुतनामधेयः ॥

सोऽप्यङ्गनानयनपाशनिरुद्धबुद्धि-
रुन्मार्गसङ्गविमुखीकृतसर्वसत्त्वः।
दोषप्रकोपविषमप्रकृतिश्लथाङ्गः
प्रापत्क्षयं सहजतेजसि जातजाड्ये ॥

सामन्तैरथ रट्टराज्यमहिमालम्बार्थमभ्यर्थितो
देवेनापि पिनाकिना हरिकुलोल्लासैषिणा प्रेरितः।
अध्यास्त प्रथमो विवेकिषु जगत्तुङ्गात्मजोऽमोघवा-
क्पेयूषाब्धिरमोघवर्षनृपतिः श्रीवीरसिंहासनम् ॥

श्रीकृष्णराजदेवस्तस्मात्परमेश्वरादजनि सूनुः।
यः शक्तिधरः स्वामी कुमारभावेऽप्यभूद्भुवने ॥

श्रीरट्टराज्यपुरवररक्षापरिखां मदेन यस्याज्ञाम्।
विपुलां विलङ्घयन्तः स्वयमलपन्द्रोहिणोऽधस्तात् ॥

येन मधुकैटभाविव पुनरुन्मग्नौ जनोपमर्दाय।
श्रीवल्लभेन निहतौ भुवि दन्तिगवप्पुकौ दुष्टौ ॥

रथ्यामल्लविषद्रुममुदस्य निहतेन योऽकृत सनाथाम् ।
भूतार्थपुण्यतरुणा वाटीमिव गाङ्गपाटी च ॥
परिमलिताण्णिगपल्लवविपत्तिरासीन्न विस्मयस्थानम् ।
विस्फुरति यत्प्रतापे शोषितविद्वेषिगाङ्गौघे ॥
यस्य परुषेक्षिताखिलदक्षिणदिग्दुर्गविजयमाकर्ण्य ।
गलिता गूर्जरहृदयात्कालञ्जरचित्रकूटाशा ॥
अनमन्नापूर्वापरजलनिधिहिमशैलसिंहलद्वीपात् ।
य जनकाज्ञावशमपि मण्डलिनश्चण्डदण्डभयात् ॥
स्निग्धश्यामरुचा प्रलम्बभुजया पीनायतोरस्कया
मूर्त्या कीर्तिलताहितामृतजलैर्वृत्तैश्च सत्त्वोद्भवै ।
ज्ञात्वा य पुरुषोत्तम भरसह विश्वभराभ्युद्धृतौ
शान्ते धाम्नि लय गत प्रशमिनामाद्य कृतार्थः पिता ॥
वृत्ते नृत्तसुराङ्गने[1] सरभस दिव्यर्षिदत्ताशिषि
श्रीकान्तस्य नितान्ततोषितहरे राज्याभिषेकोत्सवे ।
यस्याबद्धकरग्रहोद्यमभवत्कम्पानुरागोदया-
द्दिक्कन्या स्वसमर्पणार्थमभवल्लमानुकूल्यप्रिया ॥

स च परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदमोघवर्षदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरश्रीमदकालवर्षपृथ्वीवल्लभश्रीमद्वल्लभनरेन्द्रदेवः कुशली सर्वानेव स्वजानपदान्समाज्ञापयति—अस्तु व सविदितम्—यथा श्रीमान्यखेटराजधानीस्थितेन शकनृपकालातीतसवत्सरशतेष्वष्टासु द्विषष्ट्यधिकेषु ८६२ शार्वरीसंवत्सरान्तर्गतवैशाखबहुलपञ्चम्या मम प्राणेभ्योऽपि प्रियतमस्य कनीयसो भ्रातु. श्रीमज्जगत्तुङ्गदेवस्य पुण्ययशोभिवृद्धये । अपि च ।

ज्येष्ठे भ्रातरि कुर्वता निरुपमा भक्ति जितो लक्ष्मण'
सौन्दर्येण मनोभव' सुचरिते रामस्य धर्मात्मजा ।

---

१ 'णे' इति भवितव्यम्

कान्त्या शीतिरुचिश्च येन सतत शौर्येण सिहो जग-
त्तुङ्गस्योस्त्वभिवाञ्छितप्रदमिद तस्येति दान भुव ॥

अनेनाभिसधिना मया नन्दिवर्धनविनिर्गतभारद्वाजसगोत्रवाजिकाण्वशाखासब्रह्मचारि भाइल्लसुतवेदवेदा पारगरिषियप्याय नागपुरनन्दिवर्धनान्तर्गततालपुरुषकनामा ग्राम सोद्रङ्ग सपरिकर सधान्यहिरण्यादेय सदण्डदोषदशापराध सर्वोत्पत्तिसहित पूर्वप्रसिद्धचतु सीमपर्यन्त॰ ब्रह्मदायन्यायेनाचन्द्रार्क नमस्यो दत्त । यस्य पूर्वत मादाटढिढरनामा ग्राम, दक्षिणतः कह्नानदी, पश्चिमत मोह्मग्राम॰, उत्तरत वध्रीरग्राम, एव चतुराघाटविशुद्ध तालापुरुषक रिषियपप्यस्य कृषत कर्षयतो भुञ्जतो भोजयतो वा न केनचिद्व्याघात कार्य.। यश्च व्याघात करोति स पञ्चभिरपि महापातकै॰ सयुक्त स्यात्। अन्यच्च।

स्वदत्ता परदत्ता वा यो हरेत वसुधराम्।
स विष्ठाया कृमिर्भूत्वा पितृभि॰ सह पच्यते॥
सामान्योऽय धर्मसेतुर्नृपाणा काले काले पालनीयो भवद्भि ।
सर्वानेव भाविन पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्र ॥

चेवानन्वेरस्य भ्रात्रा योग्राष्टचेन लिखितमिति॥

(एपिग्राफिआ इण्डिका—५।१९२ १९६)

---

## (१५७)

## अमरनाथमन्दिरस्तम्भोत्कीर्णशासनद्वयम्[1]।

अस्ति श्रीधान्यकटक पुर सुरपुराद्वरम्।
यत्रामरेश्वर शम्भुरमरेश्वरपूजितः॥
बुद्धो देवः सुसान्निध्यो यत्र धात्रा प्रपूजित.।
चैत्यमत्युन्नत यत्र नानाचित्रसुचित्रितम्॥

---

१ इद लेखद्वय कृष्णाप्रान्ते सत्तनपल्लीतालुकायाममरावतीनगर्याममरेश्वरमन्दिरमध्यभागस्य दक्षिणद्वारस्थितस्तम्भपार्श्वचतुष्के समुल्लिखित समुपलभ्यते

अस्ति तत्र स्थिरैश्वर्यं राज्ञामाज्ञावता कुलम् ।
अमरेश्वरदेवेन रक्षित रक्षक नृणाम् ॥
जात सुरेन्द्रदैत्येन्द्रमुनीन्द्रगणवन्दितात् ।
श्रेयसा भूयसा दातुर्धातुर्यच्चरणद्वयात् ॥
क्षोणीक्षेमकरा भूपा यत्र शत्रुभयकरा ।
शकरा साधुवृत्ताना शंकरस्य तु किंकरा ॥
तत्रामरेशसकाशो भीमो नाम नृपोऽभवत् ।
विश्वे विश्वभराधीशा यत्पादाम्बुजषट्पदा ॥
उर्वीपतिषु सर्वेषु सदृक्षो यस्य नेक्षितः ।
प्रजाना पालने सम्यग्द्विषामुन्मूलने तथा ॥
चक्रे पवित्रचारित्रो भक्त्या शक्त्या च भव्यया ।
यः सुरेशान्नरेशाश्च वरदान्करदानपि ॥
यो भूरिभक्तिसुप्रीत शर्वे सर्वमनोरथान् ।
कृतवान्मित्रसघस्य कृतवाञ्छत्रुसहतेः ॥
विस्मापितजना यस्य विस्मारितरणान्तरा ।
वीरपूरितजम्भारिपुरा रणपरम्परा ॥
यस्य क्ष्माचक्रशक्रस्य चक्रिचक्रसमौजसा ।
चक्रेण विक्रम्य दिशा चक्र चक्रे भृश वशम् ॥
क्षिप्र विपक्षवक्षासि पाटयन्तोऽतिपाटवात् ।
नृसिंहनखरेभ्योऽपि प्रखरा यच्छरा बभु ॥
कान्त्या पूर्णा रणे तूर्णं यद्धनु प्रेरितै शितै ।
अर्धचन्द्रैर्व्यलङ्घयन्त वक्रचन्द्रा विरोधिनाम् ॥
महामहीध्रानारोहन्यद्रणे विद्रुता द्विषः ।
तीक्ष्णै क्षुण्णाः पुनः शस्त्रैर्या भयातिशयादिव ॥
यद्भटोद्भटदोर्दण्डचण्डायुधविखण्डिता ।
अखण्डविक्रमाः शाक्रमाक्रामन्नरयः पुरम् ॥

पांसुव्राते समुद्भूते यद्धयैः समरोद्धतैः ।
व्योमव्यापिनि सक्लेश सभ्रु सप्ताश्वसप्तय ॥
नमयन्तो भुव भीमा पदन्यासेन यद्गजा ।
द्विङ्गजाना रणे चक्रुर्दिग्गजाना च पीडनम् ॥
चलयद्भी रणारम्भेष्वचलामचलै सह ।
यद्बलै शत्रुशौर्याणा चालन लीलया कृतम् ॥
प्राकारै पातितैः सम्यक्परिखा परिपूर्य य ।
प्रध्वस रिपुदुर्गाणा प्रागभावसम व्यधात् ॥
दूरस्था अपि वीरस्य यस्य भ्राजिष्णुतेजस ।
आज्ञा कुर्वन्ति सर्वे स भूभृत प्राभृतप्रदा ॥
येन धर्मप्रधानेन कारुण्योपेतचेतसा ।
पुत्रा इव परित्राता शत्रवः शरणागताः ॥
चरित्रेण पवित्रेण विद्यया निरवद्यया ।
भूषितास्तोषिता येन भूसुरा भासुरान्वयाः ॥
विवेकेनारिषड्वर्गमरिवर्गं भुजौजसा ।
जित्वार्जितचतुर्वर्गो नृपवर्गे रराज य ॥
तस्य प्रशस्यचारित्रख्यात केतनृपः सुत ।
पटुर्दीनार्तिहरणे रणे वितरणे च य ॥
युद्धे यद्धेतिभिन्नारिकिरीटमणिभिः श्रिता ।
घनाहतोत्तप्तलोहस्फुलिङ्गैरिव भूरभात् ॥
बहुशोऽभिमुखप्राप्त स्फुटाभ्यागमपर्वसु ।
राजमण्डलमग्रासि सम्यग्यद्बाहुराहुणा ॥
सर्वसर्वसहाधीशगर्वपर्वतपाटने ।
पटुः प्रथीयान्प्रथितो यत्प्रतापपविर्भुवि ॥
तस्यासीद्भीमभूमीशस्तनयो विनयोन्नतः ।
यः शोभा शत्रुभूपाना भाना भानुरिवाहरत् ॥

दूरपाता दृढाघाता भीषणा रुक्मभूषणा ।
अमोघा यस्य बाणौघा रेजिरे समराजिरे ॥
विक्रमादक्रियन्तोच्चैर्येन नानाधराधरा ।
त्रस्तशत्रुधरत्रीशकुलाकुलगुहागृहा ॥
कृता पुण्यवता येन सर्वसपत्समन्विता ।
विबुधा भूमिविबुधा विबुधा इव विष्णुना ॥
तद्भार्या **सब्बमा**देवी ख्याताभूद्भुवि वीरसूः ।
वश्या' शौर्योन्नता यस्या. पित्रो. श्वशुरयोरपि ॥
तस्मात्ताभ्या समुद्भूत केशभूप. प्रतापवान् ।
सद्गुणैरुपमानाना योऽकार्षीदुपमेयताम् ॥
नेता सम्यक्प्रजाना यो जेता युद्धेषु विद्विषाम् ।
दातार्थिभ्योऽर्थितार्थाना त्राता च शरणार्थिनाम् ॥
य प्रह्वीकृतभूपालो भूपालनयपण्डित ।
पण्डितस्तुतसद्वृत्तः सद्वृत्तजनवत्सल ॥
येन ध्वस्तविभूतीनामरातीनामभून्मुखम् ।
अन्तः सतापसतार्चिर्धूमेनेव मलीमसम् ॥
बाणैः किरणदेशीयैर्ध्वान्तदेश्यान्रिपुद्विपान् ।
तिग्मांशुकल्पा भिन्दन्ति यद्भटाः समरोद्भटा. ॥
चित्तस्थशिवमौलीन्दुसुधार्द्रा इव यद्गिर' ।
मधुरा नित्यमानन्दममन्द तन्वते सताम् ॥
प्रतिग्रामं प्रतिपुर प्रत्योक प्रतिचत्वरम् ।
प्रतितीर्थ प्रतिसभ यस्यौदार्यं प्रशस्यते ॥
चित्रै सत्रालयैर्यस्य पृथिव्या प्रथित यश. ।
बुभुक्षुभिक्षुसघातप्रभूतप्रीतिहेतुभि ॥
अनन्तप्राणिसुप्रीतिकारिभिर्भूरिवारिभिः ।
•तडागैः सागराभोगैर्यो विभूषितभूतलः ॥

आरामान्योऽतनोत्सारान्सरोभि शोभितान्तरान् ।
उत्फुल्लकंजकिंजल्कपुञ्जपिञ्जरितान्तरै ॥
देवालयै सुधाशुभ्रै सुवर्णकलशाङ्कितै ।
पताकाचुम्बिताम्भोदैर्येद्धर्मो नीत उन्नतिम् ॥
शाकाब्दे युगखेन्दुरूपगणिते माघे दशम्या तिथौ
शुक्लाया गुरुवासरे गुणनिधि सम्प्राप्तराज्योन्नति ।
श्रीमत्केतनृप समस्तगुरवे ग्रामान्वरेण्यान्बहू-
न्सम्प्रादात्सुगतेश्वराय विपुलश्रीधर्मसवृद्धये ॥

स्वस्ति चतु समुद्रमुद्रितनिखिलवसुधरापरिपालक श्रीमत्त्रिण(न)यनपल्लव-प्रसादासादितकृष्णवेण्णानदीदक्षिणषट्सहस्रावनीवल्लभ-भयलोभदुर्लभ-चोडचालुक्यसामन्तमदानेकपमृगेन्द्र-विभवामरेन्द्र श्रीमदमरेश्वरदेवदिव्यश्रीपादपद्माराधक-परबलसाधक-श्रीधान्यकटकपुरवराधीश्वर-प्रतापलङ्केश्वर-कलिगळमोगदकै वेङ्करिगोवकै गण्डरगण्ड गण्डभेरेण्डु जगमेच्चुगण्ड नन्निमार्तण्ड नामादिसमस्तप्रशस्तिसहित श्रीमन्महामण्डलेश्वर-कोटकेतु राजलु शकवर्षमुलु ११०४ गुनेंटि माघ शुद्ध १० गुरुवारमुन श्रीमद्बुद्ध देवरकु सुकमुलोनुगा सर्वायमुलतोनाचन्द्रार्क मुगानिच्चिन ऊड्लु कड्रवा-डिलोनि मेड्डुकोण्डूरनु डोकिपनु ॥ ई धर्मम नडपनिवारु पञ्चमहापात-कमुलु सेसिनवारु वारणासि ग्रच्चिनवारु तम पेद्द कोड्डुकु कपालमुन गुडिचिनवारु ॥

स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
षष्टिं वर्षसहस्राणि विष्ठाया जायते क्रिमि ॥
वेदाशेन्दुमिते शाके माघे शुक्ले गुरोर्दिने ।
दशम्या केतभूपालो दीपौ बुद्धाय दत्तवान् ॥

स्वस्ति समस्तप्रशस्तिसहित श्रीमन्महामण्डलेश्वरकोटकेतराजलु शव-वर्षमुलु ११०४ गुनेंटि माघ शुद्ध १० गुरुवारमुनं दमकु धर्माथमुगा श्रीमद्बुद्धदेवरकुनखण्डवर्त्तिदीपमुलु रेंटिकिनै इच्चिन इन्वण्डलु ११०।

वीनिलोन दामकअमरेवोयुड्डु रौंभदेनु गोळियल जेकोनि आचन्द्रार्कमुगा दन पुत्रानुपौत्रिकमुननित्य मानेण्डु सेसिनेयि वोयगलवाड्डु ॥ ऊट्टुकूरि केतेवोयुड्डु रौंभदेनु गोळियल जेकोनि आचन्द्रार्कमुगा दन पुत्रानुपौत्रिकमुननित्य मानेण्डु सेसिनेयि वोयगलवाड्डु ॥ भोगस्त्रीललोन गसवि-सूरमदेवुलु दनकु धर्मार्थमुगा श्रीमद्बुद्धदेवरकुनखण्डवर्त्तिदीपमुनकिच्चिन इन्पेण्टल्लु ९९। वीर्नि जेकोनि सब्बकमारेवोयुड्डु आचन्द्रार्कमुगा दन पुत्रानुपौत्रिकमुननित्य मानेण्डु सेसिनेयि वोयगलवाड्डु ॥ भडार्वु प्रोलमदेवुलु दनकु धर्मार्थमुगा श्रीमद्बुद्धदेवरकुनखण्डवर्त्तिदीपमुनकिच्चिन इन्पेण्टल्लु ९९। वीर्नि जेकोनि चेवळि कोम्मनवोनि कोड्कु माचेनवोयुड्डु आचन्द्रार्कमुगा दन पुत्रानुपौत्रिकमुननित्य मानेण्डु सेसिनेयि वोयगलवाड्डु ॥ श्री श्री श्री ।

शाकाब्दे वार्धितारापथशशिवसुधासमिते माघमासे
शुक्ले पक्षे दशम्या त्रिदिवपरिवृढाचार्यवारे वरेण्ये ।
सोऽय सप्राप्तराज्य सकलगुणनिधि केतविश्वभरेशो
ग्रामान्विज्ञातसीमान्प्रथितपृथुगुणान्प्राददाद्ब्राह्मणेभ्य. ॥

ग्राम कोकल्लुनामान प्रशस्य सस्यसपदा ।
विद्वद्भ्यो द्विजवर्येभ्यो जनन्याः श्रेयसेऽददात् ॥
गिजिपाड्डु चल्लगरा ताडिवाय च शोभनान् ।
ग्रामान्द्विजत्रा कृतवान्भूयसे श्रेयसे पितु ॥
सम्यगम्मलपूडि च ग्राम भूमिगुणान्वितम् ।
विप्रसात्कृतवान्भ्रातुर्ज्यायसे(स) श्रेयसे मुदा ॥

सत्तेनपल्लि प्रादिशदुप्पुलपाड्डु च चिन्तपल्लि च तथा ।
ओंकदोनकुटिमद्दी धर्मार्थे स्वस्य स द्विजेभ्यो ग्रामान् ॥

व्रीहिव्रातैः सुजातैरलघुफलभरै शालिसस्यै प्रशस्यै-
रुद्गाढैः सुप्ररूढैस्तिलयवचणकैर्मुद्गमाषै सयोषै ।
धान्यैश्चान्यै. समृद्धा दिशि दिशि लसिता शोभनै शाकवाटैः
शोभन्ता श्रीसमेता. सकलजनदृशामुत्सवा शश्वदेते ॥

स्वस्ति समस्तप्रशस्तिसहित श्रीमन्महामण्डलेश्वरकोटकेतराजुलुतम तल्लि सब्बमदेवुलकु गोंडनातवाडिलोनिच्चिन यूरु कोकल्लु दीनि पेरु सर्वाम्बिकापुरमु । तम तण्डि भीमराजुनकु धर्मार्थमुगा श्रीमद्ब्राह्मणोत्तमुलकु गोंडनातवाडिलोनिच्चिन यूरु कोकल्लु दीनि पेरु सब्बाम्बिकापुरमु । तम तड्रि भीम राजुनकु धर्मार्थमुगा श्रीमद्ब्राह्मणोत्तमुलकु गोंडनातवाडिलोनिच्चिन युड्लु गिंजिपाड्डु चल्लगरा ताडिवाय इवि भीमावुरमुल्लु । तमन्न चोडेराजुनकु धर्मार्थमुगा श्रीमद्ब्राह्मणोत्तमुलकु गोंडुनातवाडिलोनिच्चिन यूरु अम्मलपूडि दीनि पेरु चोडावुरमु । तनकु धर्मार्थम्रगा श्रीमद्ब्राह्मणोत्तमुलकु गोंडनातवाडिलोनिच्चिन यूड्लु कुटिमद्दि उप्पलपाड्डु कोंडपड्डुमटिलो सत्तेनपल्लि चिंत्तपल्ली केतपल्लि ए ౘ गुटल्लु दोड्डिकड्डूवाडि अदु ओंकदोन इवि जगमेच्चुगडपुरमुल्लु ईयग्रहारमुल्लु सर्वकरपरिहारमुगा मुन्नि चितिमि ॥

(एपिग्राफिआ इण्डिका—६ । १४८-१५५)

---

## (१५८)

## काङ्करोलीग्रामीयराजसागराख्यतडागस्थो लेखः[1] ।

गुञ्जापुञ्जाभरणनिचय चन्द्रकान्तिं किरीटे
गात्रे चक्र करकमलयोर्गुञ्जितं चित्रवस्त्रम् ।
मध्ये पीत वसनमपर किङ्किणीवस्त्रवेणी
नासा मुक्ता विदधति मुदे तेऽस्तु गोवर्धनेन्द्र ॥
आदौ जलमय विश्व तत्र नारायण. स्थितः ।
हिरण्यहारी तन्नाभौ पद्मकोष इहाभवत् ॥
ब्रह्मा चतुर्मुखस्तस्य मरीचिः कश्यपोऽस्य तु ।
सुतो विवस्वास्तस्यासीन्मनुरिक्ष्वाकुरस्य स. ॥

---

१ अय लेखो मेवाडप्रान्ते राजनगरनिटके काङ्करोलीग्रामे राजसागरनामकतडागस्थोपर्युत्कीर्णो वर्तते, इति भावनगरप्राचीनशोधसग्रहितार A D 1676 वि० स० १७३२

विकुक्षिः स शशादान्यनामा तस्य पुरंजयः ।
ककुत्स्थापरनामा यमस्यानेनास्ततः पृथुः ॥
ततोऽभूद्विश्वरन्धिस्तु ततश्चन्द्रस्ततोऽभवत् ।
युवनाश्वोऽस्य शावस्तो बृहदश्वोऽस्य चात्मजः ॥
ततः कुवलयाश्वोऽभूद्धुन्धुमारापराभिधः ।
दृढाश्वोऽस्यास्य हर्यश्वो निकुम्भस्तस्य वा ततः ॥
बर्हणाश्वः कृशाश्वोऽस्य सेनजित्तस्य वा ततः ।
युवनाश्वोऽस्य मान्धाता त्रसद्दस्युपराभिधः ॥
चक्रवर्त्यस्य तनयः पुरुकुत्सोऽस्य वा सुतः ।
त्रसद्दस्युर्द्वितीयोऽस्मादनरण्यस्ततोऽभवत् ॥
हर्यश्वोऽस्यारुणस्तस्य त्रिबन्धननृपस्ततः ।
सत्यव्रतस्त्रिशङ्कुस्तु तस्य नामान्तरं ततः ॥
हरिश्चन्द्रो रोहितोऽस्य तस्य वा हरितस्ततः ।
चपस्तस्य सुदेवोऽस्माद्विजयो भरुकोऽस्य वा ॥
तस्माद्वृको बाहुकोऽस्य तत्पुत्रः सगरः स च ।
चक्रवर्ती सुमत्या तु पत्न्या तस्याभवन्सुताः ॥
श्रेष्ठाः षष्टिसहस्रोचत्सख्याः सागरकारकाः ।
सगरस्यान्यपत्न्या तु केशिन्यामसमञ्जसः ॥
ततोंऽशुमान्दिलीपोऽस्मात्तस्माज्जातो भगीरथः ।
ततः श्रुतस्ततो नाभः सिन्धुद्वीपोऽस्य तत्सुतः ॥
अयुतायुस्तस्य जातः ऋतुपर्णस्तु तत्सुतः ।
सर्वकामः सुदासोऽस्य तस्मान्मित्रसहः पतिः ॥
यदपत्यः सकल्माषपादान्याख्योऽस्य चाश्मकः ।
मूलकोऽस्माद्दशरथस्ततः एडविडस्ततः ॥
जातो विश्वसहस्तस्मात्खट्वाङ्गश्चक्रवर्त्यतः ।
दीर्घबाहुर्दिलीपोऽस्य रघुरस्माज इत्यतः ॥

जातो दशरथस्तस्य कौशल्याया सुतोऽभवत् ।
श्रीरामचन्द्र कैकेय्या भरतो रामभक्तिमान् ॥
सुमित्राया लक्ष्मणश्च शत्रुघ्नश्चेति रामत ।
श्रीसीताया कुशो जातो लवश्चेति कुशादभूत् ॥
कुमुद्वत्यामतिथिको निषधोऽस्य ततो नल ।
नभोऽस्य पुण्डरीकोऽस्य क्षेमधन्वा ततोऽभवत् ॥
देवानीकस्ततोऽहीन. पारियात्रोऽस्य तत्सुतः ।
वलस्तस्य स्थलस्तस्माद्वज्रनाभस्ततोऽभवत् ॥
सगणस्तस्य विधृतिः पुत्रस्तस्य सुतोऽभवत् ।
हिरण्यनाभ पुष्योऽस्माद्ध्रुवसिद्धिस्ततोऽभवत् ॥
सुदर्शनोऽस्याग्निवर्णस्तस्य शीघ्रस्ततोऽभवत् ।
ततः प्रसुः श्रुतस्तस्मात्सधिस्तस्मात्तु मर्षण ॥
ततो महास्वास्तस्याभूद्विश्वसाह्व' प्रसेनजित् ।
ततस्ततस्तक्षकोऽस्माद्बृहद्बल इति स्वयम् ॥
महाभारतसग्रामे निहतस्त्वभिमन्युना ।
एते व्यतीता व्यासेन सप्रोक्ता भारते नृपाः ॥
अनागताञ्जगादैव व्यासस्तत्र वदामि तान् ।
बृहद्बलाद्बृहद्रणस्तस्योरुक्रिय इत्यतः ॥
वत्सवृद्ध प्रतिव्योमस्तस्यास्माद्भानुरस्य वा ।
दिवाकस्तस्य पदवी वाहिनीपतिरित्यभूत् ॥
तस्यासीत्सहदेवोऽस्य बृहदश्वस्ततोऽभवत् ।
भानुमान्वा प्रत्यकाश्वोऽस्य तस्मात्सुप्रतीकक: ॥
ततोऽभून्मरुदेवोऽस्मात्सुनक्षत्रोऽस्य पुष्कर. ।
ततोऽन्तरीक्ष' सुतपास्तस्मान्मित्रजिदस्य तु ॥
बृहद्राजस्ततो बर्हिस्तस्मात्तस्य कृतञ्जय' ।
तस्माद्रणजयस्तस्य सजयः शाक्य इत्यत' ॥

शुद्धोदोऽस्माल्लाङ्गलोऽस्य प्रसेनजिदयस्ततः ।
क्षुद्रकस्तस्य रुणकस्तस्यासीत्सुरथस्ततः ॥
सुमित्रस्तु सुमित्रान्त इक्ष्वाकोरन्वयोऽभवत् ।
उक्ता भागवतस्कन्धे नवमे ते मयोदिता ॥
द्वाविंशत्यग्रशतकमेषा सख्या कृता वदे ।
प्रसिद्धात्सूर्यवंशस्थाद्वज्रनाभोऽभवत्ततः ॥
महारथीति राजेन्द्रस्तस्मादतिरथी नृपः ।
तस्माद्वचलसेनस्तु सेनास्य त्वप्रहारणे ॥
तस्मात्कनकसेनोऽस्य महासेनोऽङ्ग इत्यतः ।
तस्माद्विजयसेनोऽस्याजयसेनस्ततोऽभवत् ॥
अभङ्गसेनस्तस्मात्तु मदसेनस्ततोऽभवत् ।
भूपः सिंहरथस्त्वेते अयोध्यावासिनो नृपाः ॥
तस्माद्विजयभूपोऽथ मुक्त्वायोध्यां रणागतान् ।
जित्वा नृपान्दक्षिणस्थानवसद्दक्षिणक्षितौ ॥
तत्रास्याकाशवाण्यासीन्मुक्त्वा राजाभिधामपि ।
आदित्याख्या तु धर्तव्या भवता भवदालये ॥
जाता विजयभूपान्ता राजानो मनुपूर्वकाः ।
वीराः सख्ये जितः तेषां पञ्चत्रिंशयुतं शतम् ॥

आसीदित्यादि द्वितीयः सर्गः । संवत् १७१८ वर्षे माघमासे कृष्ण-पक्षे सप्तम्या तिथौ रायसमुद्र मुहरत राणे राजसिंह कीधो सवत् १७३२ वर्षे माघमासे शुक्लपक्षे १५ तिथौ राजसमुद्रप्रतिष्ठा कारापिता गजधर-मुख्यः । राम । श्रीकल्याणमस्तु ॥

(भावनगरप्राचीनलेखसंग्रह.—१ । ७५–७८)

---

(१५९)

## काङ्करोलीग्रामीयराजसागराख्यतडागस्थो लेखश्चतुर्थः।

उल्लोलीभवदुन्नताच्छसुरभीपुच्छच्छटाचामर'
सद्गोवर्धनधन्यगोत्रविलसच्छत्रो जितेन्द्रो बली ।
गोपालैः कलितश्च गोपतनयैर्गोपीप्रिय प्रेमवा-
न्पायाद्गोधनभक्तरक्षणपर सच्चक्रवर्ती हरिः ॥
ततो **विजयभूपस्य पद्मादित्यो**ऽभवत्सुत ।
**शिवादित्यो**ऽस्य पुत्रोऽभूद्धरदत्तोऽस्य वा सुतः ॥
**सुजसादित्य**नामास्मात्**सुमुखादित्य**कस्तत ।
**सोमदत्त**स्तस्य पुत्र **शिलादित्यो**ऽस्य चात्मज ॥
**केशवादित्य** एतस्मा**न्नागादित्यो**ऽस्य चात्मज ।
**भोगादित्यो**ऽस्य पुत्रोऽभू**द्देवादित्य**स्ततोऽभवत् ॥
**आशादित्यः कालभोजादित्यो**ऽस्मात्तनयोऽस्य तु ।
**गुहादित्य इहादित्या**श्चतुर्दशमितास्तत'॥
**गुहादित्य**सुता. सर्वे **गहिलोता**भिधा युला ।
जाता युक्त तेषु पुत्रो ज्येष्ठो **बप्पा**भिधोऽभवत् ॥
य दृष्ट्वा नन्दिन गौरी दृशो **बाष्प** पुरासृजत् ।
नन्दीगणोऽसौ **बाष्पो**ऽपि प्रियादृग्बाष्पदोऽभवत् ॥
हारीतराशि स मुनिश्चण्डः शभोर्गणोऽभवत् ।
तस्य शिष्योऽभव**द्बाष्प**स्तस्याज्ञातः प्रसादतः ॥
**नागह्रदपुरे** तिष्ठन्नेकलिङ्गशिवप्रभोः ।
चक्रे **बाष्पो**ऽर्चन चासै वरान्रुद्रो ददौ ततः ॥
**चित्रकूट**पतिस्त्व स्यास्त्वद्वश्यचरणाद्ध्रुवम् ।
मा गच्छताच्चित्रकूट सततिः स्यादखण्डिता ॥
प्राप्येत्यादिवरान्**बाष्प** एकस्मिन्शतके गते ।
एकाग्रनवतिसृष्टे माघे पक्षवलक्षके ॥

सप्तमीदिवसे बाष्प स पञ्चदशवत्सरः ।
एकलिङ्गेशहारीतप्रसादाद्भाग्यवानभूत् ॥
नागह्रदाख्ये नगरे विराजी नरेश्वर खड्गधरेषु धन्य ।
बलेन देहेन च भोजनेन भीमो रणो भीमसमो रिपूणाम् ॥
पञ्चाधिकत्रिंशदमन्दहस्तप्रमाणयुक्पट्टपट दधान. ।
बभौ निचोल किल षोडषोद्यत्करप्रमाण विमल वसानः ॥
श्री एकलिङ्गेन मुदा प्रदत्त हारीतनाम्ने मुनयेऽथ तेन ।
दत्त दधानः कटक च हैम पञ्चाशदुद्यत्पलमानमास्ते ॥
द्वात्रिंशदुद्यत्तमढब्बुकाद्यै. प्रस्थाभिधै शेरवरै कृतस्य ।
मणस्य चैकस्य भर हि चत्वारिंशन्मितैर्बिभ्रदसिं दधान ॥
एकप्रहारान्म षौ महासेर्दुर्गार्चनाया जवतो विनिघ्नन् ।
भुञ्जन्महाच्छागचतुष्टय स अगस्त्यशस्त्यः प्रबभूव बाष्पः ॥
तत स निर्जित्य नृप तु मोरीजातीयभूप मनुराजसञ्ज्ञम् ।
गृहीतवाश्चित्रितचित्रकूटं चक्रेऽत्र राज्य नृपचक्रवर्ती ॥
राज्यातिपूर्णत्ववरत्वलक्ष्मीमयत्वशब्दादिमवर्णयुक्ताम् ।
ता रावलाख्या पदवीं दधानो बाष्पाभिधान स रराज राजा ॥
तत खुमाणाभिधरावलोऽस्माद्गोविन्दनामाथ महेन्द्रनामा ।
आलूनृपोऽस्मादथ सिंहवर्मा तस्यात्मज शक्तिकुमारनामा ॥
जातस्ततो रावलशालिवाहनस्तस्यात्मजोऽभून्नरवाहनस्तत ।
अम्बाप्रसादोऽस्य च कीर्त्तिवर्मकस्तत्पुत्र आसीन्नरवर्मनामक ॥
ततो नृपालो नरपत्यभिख्यस्त्वथोत्तमोऽस्मान्नृपभैरवोऽस्मात् ।
श्रीपुञ्जराजोऽभवदस्य कर्णादित्यः सुतोऽस्यापि च भावसिंहः ॥
श्रीगात्रसिंहोऽथ स हंसराजः सुतोऽस्य सूनु शुभयोगराजः ।
सवैरडाख्योऽथ सवैरिसिंहस्ततोऽस्य वा रावलतेजसिंहः ॥
ततः समरसिंहाख्य पृथ्वीराजस्य भूपते. ।
पृथाख्याया गभिन्यास्तु पतिरित्यतिहार्दत ॥

गोरीसाहिबदीनेन गज्जनीशेन सगरम्।
कुर्वतोऽखर्वगर्वस्य महासामन्तशोभिन ॥
दिल्लीश्वरस्य चोहाननाथस्यास्य सहायकृत्।
स द्वादशसहस्रै स्ववीराणा सहितो रणे ॥
बद्ध्वा गोरिपतिं दैवात्स्वयातः सूर्यबिम्बभित्।
भीखारासापुस्तकेऽस्य युद्धस्योक्तोऽस्ति विस्तरः ॥
तस्यात्मजोऽभून्नृपकर्णरावलः प्रोक्तास्तु षड्विंशतिरावला इमे।
कर्णात्मजो माहयरावलोऽभवत्स डूगराद्ये तु पुरे नृपो बभौ ॥
कर्णस्य जातस्तनयो द्वितीय श्रीराहपः कर्णनृपाज्ञयोग्र।
वाक्येन वा शाकुनिकस्य गत्वा मंडोवरे मोकलसी स जित्वा ॥
तातान्तिके त्वानयति स भद्र कर्णोऽस्य राणाबिरुद गृहीत्वा।
मुमोच त चारु ददौ तदीय राणाभिधान प्रियराहपाय ॥
भव्याशिषा ब्राह्मणपल्लिवालज्ञातीयविप्रच्छरशल्यनाम्नः।
श्रीचित्रकूटे वललब्धराज्य चक्र ततो राहप एष वीर. ॥
ततो बभौ चित्रकूटे राहपो वाहपोषकः।
पूर्व शिशोदनगरे वासाच्छीशोदिया स्मृत ॥
राणाबिरुदलाभेन राणेत्युक्तोऽखिलैर्बभौ।
वशेऽस्याग्रे भविष्यन्ति राणाबिरुदिनो नृपा. ॥
राजेन्द्रराजीपूज्योऽय नारायणपरायणः।
विशेषणादिवर्णाढ्या वीरो राणाभिधा दधौ ॥
आसीद्भास्करतस्तु माधवबुधोऽस्माद्रामचन्द्रस्ततः
सत्सर्वेश्वरक कठोडिकुलजो लक्ष्म्यादिनाचस्ततः।
तैलङ्गोऽस्य तु रामचन्द्र इति वा कल्पोऽस्य वा माधवः
पुत्रोऽभून्मधुसूदनस्त्रय इमे ब्रह्मेशविष्णूपमा. ॥
यस्याभून्मधुसूदनस्तु जनको वेणी च गोस्वामीजा-
भून्माता रणछोड एष कृतवान्राजप्रशस्त्याह्वयम्।

काव्य सान्वयराजसिंहसुगुणश्रीवर्णनाद्य मह-
द्वीराङ्क समभूत्तृतीय इह तत्सर्ग' सुसर्ग स्फुटम् ॥

इति श्रीतैलङ्गज्ञातीयकठोडीपतिपण्डितोपनाममधुसूदनभट्टपुत्ररणछोडकृते राजप्रशस्त्याह्वये महाकाव्ये तृतीय सर्ग' ॥ सवत् १७२२ वर्षे माघशुक्ला १९ रायसमुद्रप्रशस्ति ॥

---

# (१६०)

## आदिनाथजैनमन्दिरस्थस्तम्भशिलालेखः ।

श्रीयशोभद्रसूरिगुरुपादुकाभ्या नम ।

सवत् १९९७ वर्षे वैशाखमासे शुक्लपक्षे षष्ठचा तिथौ शुक्रवासरे पुनर्वसुऋक्षप्राप्तचन्द्रयोगे श्रीसण्डेरगच्छे कलिकालगौतमावतार—समस्तभविकजनमनोम्बुजविबोधनैकदिनकर—सकललब्धिविश्रामयुगप्रधान—जितानेकवादीश्वरवृन्द—प्रणतानेकनरनायकमुकुटकोटिघृष्टपादारविन्द—श्रीसूर्य इव महाप्रसाद—चतु'षष्टिसुरेन्द्रसगीयमानसाधुवाद—श्रीषण्डेरकीयगणबुधावतंस—सुभद्राकुक्षिसरोवरराजहस—यशोवीरसाधुकुलाम्बरनभोमणिसकलचारित्रिचक्रवर्तिवक्तृचूडामणि भ० प्रभुश्रीयशोभद्रसूरयस्तत्पट्टे श्रीचाहुमानवशशृङ्गार—लब्धसमस्तनिरवद्यविद्याजलधिपार—श्रीबदरादेवीदत्तगुरुपदप्रसाद—स्वविमलकुलप्रबोधनैकप्राप्तपरमयशोवाद भ० श्रीशालिसूरिस्त० श्रीसुमतिसूरिस्त० श्रीशान्तिसूरिस्त० श्रीईश्वरसूरि', एव यथाक्रममनेकगुणमणिगणरोहणगिरीणा महासूरीणा वशे पुन श्रीशालिसूरिस्त० श्रीसुमतिसूरिस्तत्पट्टालकारहार भ० श्रीशान्तिसूरिवराणा सपरिकराणा विजयराज्ये, अथेह श्रीमेदपाटदेशे श्रीसूर्यवशीयमहाराजाधिराजश्रीशिलादित्यवशे श्रीगुहिदत्त—राउलश्रीबप्पाक—श्रीखुमाणादिमहाराजान्वये राणाहमीर—श्रीखेतसिंह—श्रीलखमसिंहपुत्र—श्रीमोकलमृगाङ्कवंशोद्द्योतकारप्रतापमार्तण्डावतार—आसमुद्रमहीमण्डलाखण्डल—अतुलम-

हाबल–राणाश्रीकुम्भकर्णपुत्र–राणाश्रीरायमल्लविजयमानप्राज्यराज्ये तत्पुत्रमहाकुवरश्रीपृथ्वीराजानुशासनाच्छ्रीउकेशवशे रायजडारीगोत्रे राउलश्रीलाखणपुत्र म० दूदवशे म० मयूरसुत म० सादूलस्तत्पुत्राभ्या म० सीहासमदाभ्या सद्बान्धव म० कर्मसीधाराालाखादिसुकुटुम्बयुताभ्या श्रीनन्दकुलवत्यां पुर्यां स० ९६४ श्रीयशोभद्रसूरिमन्त्रशक्तिसमानीताया त० सायरकारितदेवकुलिकाद्युद्धारित–सायरनाम–श्रीजिनवत्या श्रीआदीश्वरस्य स्थापना कारिता कृता श्रीशान्तिसूरिपट्टे देवसुन्दरेत्यपरशिष्यनामभि आ० श्रीईश्वरसूरिभिरिति लघुप्रशस्तिरिय लि० आचार्य श्रीईश्वरसूरिणा उत्कीर्णा सूत्रधार सोमाकेन शुभम् ॥

(भावनगरप्राचीनशोधसग्रह —१। ९४–९६)

---

## (१६१)

## निकुम्भवंशीयश्रीमद्गोवनमहीपालानां दानपत्रम्[1]।

आधारो धरणी सुधाशुतरणी ह्लादप्रकाशप्रदा-
वाकाशस्त्ववकाशदोऽथ जगत पाकप्रद पावक ।
प्राणो वायुरथायुरम्बु हविषामाप्यायको दायको
यन्मूर्त्यष्टकभावित जगदिद पायात्स व शकर' ॥
अस्तु स्वस्ति समस्तभास्करमहावशाय यत्राभव-
द्भूभृच्छ्रेष्ठनिकुम्भनामनृपतिर्यस्यान्वये विश्रुत ।
[मान्धा]ता सगरो भगीरथमुखा किं वर्ण्यमस्मात्पर
यत्र त्रातुमिद जगज्जगदिनो रामोऽवतीर्ण स्वयम् ॥
वशे तत्र निकुम्भनामनृपते श्रीकृष्णराजोऽभव-
द्विख्यातक्षितिपालमौक्तिकमणिश्रेण्या श्रित श्रेष्ठताम् ।

---

१ इद दानपत्र Fleet and Burgess's Pâlî, Sanskrit and old Canarese Inscriptions नामकपुस्तकात्सगृह्य G Buhler महाशयवरै प्राकाश्य नीतम् शकसवत् १०७५ (A D 1153-54)

जातस्तत्तनयोऽवनेरवनतो यो **गोवनः** कीर्त्यते
　तत्पुत्रो नृपदर्पसर्पगरुडो **गोविन्दराजोऽ**जनि ॥
**गोविन्दादपि गोवनः** पुनरभूद्भूपालचूडामणि
　पुत्रस्तस्य **निकुम्भ**वशतिलक **श्रीकृष्णराजो**ऽभवत् ।
यत्सत्कीर्तिसुधा विधूतशिरस साकूणिताक्षा रसा-
　दद्यापीह पिबन्ति कर्णपुटकैर्दिक्षु क्षितौ क्ष्माभृत. ॥
पूर्वं योऽवततार भारमवनेर्हर्तुं सुराराजित
　श्रीकसो वसुदेवदेवकसुताहर्म्ये सुरम्ये हरि ।
भूयो **गोवन**भूपभव्यभवने भूत्वाथ जित्वा रिपू-
　न्कृत्वा पालकमि**न्द्रराज**मवने स्वर्गं जगाम स्वयम् ॥
　उत्कीर्णचन्द्रफलकस्वगुणप्रशस्ते
　　कि वर्ण्यतेऽत्र भुवि कृष्णनृपस्य तस्य ।
　किं स्वामिदेवगुरुभक्तिरुदारकीर्ति-
　　रत्यन्तसत्यमुत शौर्यमथार्यता वा ॥
**कृष्ण** ब्रूहि यम त्वया यदनिश दत्त द्विजेभ्यो धन
　गृह्णीष्व त्वमिद न देव किमिति प्रत्त कथ गृह्यते ।
क्रीडायामपि यत्तु दत्तमहरन्नाह न मद्वशजा
　इत्यार्यत्वसुतोषितो दिवि चकारास्मै स तुङ्ग पदम् ॥
　अहितविहितघात **कृष्णराजा**त्प्रजात
　　प्रचुरसुकृतभाज कीर्तिमा**निन्द्रराज** ।
　परिवृढदृढभक्ति सगरेऽचिन्त्यशक्ति
　　सुजनकमलभानुर्दुष्टकक्षे कृशानु ॥
दोर्दर्पोद्धुरकन्धरारिसुमहासामन्तसीमन्तिनी-
　नेत्रप्रच्युतवारिपूरविलसद्वशायते यद्यश ।
नासीन्नोऽत भविष्यति क्षितिपतिर्दृष्ट. श्रुतो वा क्वचि-
　त्त्यागे सत्यगुणे रणे सुचरणे य. श्रीन्द्रराजोपम. ॥

शत्रुर्मित्रायते कल्पवृक्षायन्ते च दुर्जना॰ ।
राज्ये यस्येन्द्रराजस्य कलि॰ कृतयुगायते ॥
श्रीदेवी सगरान्वयातिदयिता यत्पट्टराज्ञी सती
या राज्ञी वनिताजनस्य निधिनामौदार्यदीक्षागुरु ।
कि कीर्ति किमु सुन्दरत्वमथ किं सौभाग्यभाग्योदय
किं दान प्रतिपन्नपालनगुणस्तस्यास्तु किं वर्ण्यते ॥
कृष्णसमो रणेऽर्जुनसमस्त्यागे स नागार्जुनो
देवब्राह्मणसाधुवृन्दकुमुदाह्लादाय चन्द्रोदय ।
यत्सूनुर्ननु गोवनो रणपटु॰ खङ्गस्तु यस्यासक्त-
दृप्तारिद्विपकुम्भपीठलुठनप्रोत्कण्ठकण्ठीरव ॥
यन्मन्त्री नृपनीतिवित्तविलसल्लक्ष्मीलताकन्दक
रासु भासुररणे निर्व्याजशूरो द्विज॰ ।
विद्वान्सज्जनरञ्जनोऽतिचतुर॰ श्रीचङ्गदेवाह्वयो
येन स्वीयधियेन्द्रराजचरणाक्रान्ताः कृता शत्रव॰ ॥
राष्ट्रस्य पुष्टि सुजनस्य तुष्टिर्धर्मस्य वृद्धि॰ सकलार्थसिद्धि॰ ।
नन्दन्ति सन्त॰ प्रसरन्ति लक्ष्म्य श्रीचङ्गदेवे सति सत्प्रधाने ॥
वाचस्पतिः किमुशना नरवेषपट्ट
किं वा निधिर्नृपतिसद्मनि पद्मनामा ।
चिन्तामणिर्नु सुकृतादवतीर्ण इत्व
य तर्कयन्ति सुजना॰ प्रचुरप्रभावम् ॥
वर्षाणा पञ्चसप्तत्या सहस्रे(१०७५) स्वविके गते ।
शकभूपालकालस्य तथा श्रीमुखवत्सरे ॥
अतिसुरसमसारासारससारतुङ्ग-
क्षितिह फलमवाप्त पुण्यरूप तदेदम् ।
मदनदहनहर्म्यं कारयामास तुङ्ग
स गुणगणनिधानश्रीन्द्रराजाभिधानः ॥

हे भूपा भुवि भाविनोऽञ्जलिपुट बद्धेन्द्रराजो भृश
याचे किंचिदह नृजीवितमरे कल्लोललोल यतः ।
राज्य तन्नलिनीदलाम्बुतरल तस्मात्स्वधर्मं ध्रुव
सत्य न त्यजत स्वदत्तमपरैर्दत्त च तत्पाल्यताम् ॥
देवसंगमनामान ग्राम देवाय गोवनः ।
श्रीदेव्यनुमते प्रादात्प्रतिष्ठामकरोद्यदा ॥

(इण्डियन् आण्टिक्केरी—८ । ३९–४१)

## (११२)

## प्रशान्तरागापरनामधेयश्रीमद्दद्दमहाराजानां तृतीयं दानपत्रम्[1] ।

(A D 479)

ॐ स्वस्ति विजयविक्षेपाद्भरुकच्छप्रद्वारावासकात्सकलघनपटलवि-निर्गतरजनिकरकरावबोधितकुमुदधवलयश.प्रतापस्थगितनभोमण्डलोऽनेक-समरसकटप्रमुखागतनिहतशत्रुसामन्तकुलवधूप्रभातसमयरुदितफलोद्गीयमा-नविमलनिस्त्रिंशप्रताप, देवद्विजातिगुरुचरणकमलप्रणामोद्धृष्टवज्रमणिको-टिरुचिरदीधितिविराजितमुकुटोद्भासितशिरा, दिनानाथातुराभ्यागतार्थि-जनक्लिष्टपरिपूरितविभवमनोरथोपचीयमानत्रिविष्टपैकसहायधर्मसचय, प्र-णयपरिकुपितमानिनीजनप्रणामपूर्वमधुरवचनोपपादितप्रसादप्रकाशीकृतवि-दग्धनागरकस्वभाव, विमलगुणपञ्जरक्षिप्तबहलकलितिमिरनिचयश्रीमद्दद्द, तस्य सूनु समदप्रतिद्वन्द्विगजघटाभेदिनिस्त्रिंशविक्रमप्रकटितमृगपतिकि-शोरवीर्यावलेप., पयोनिधीकृतोभयतटप्ररूढवनलेखविहृतनिरङ्कुशदानप्रवा-हप्रवृत्तदिग्दन्तिविभ्रमसमूह, स्फटिककर्पूरपिण्डपाण्डुरयशश्चन्दनचर्चिता-ङ्गसमुन्नतगगनलक्ष्मीपयोधरोत्सङ्ग, श्रीजयभट्टः, तस्यात्मज प्रतिहतसकल-

१ इद च दानपत्र Indian Antiquary Vol V P 110त उद्धृत्य G Buhler पण्डितवरेण प्राकाश्य नीतम्

जगद्व्यापिदोषाधिकारविजृम्भितसततततमोवृद्धि', अधिकगुरुस्नेहसपत्कविमल-
दिशोद्भासितजीवलोक , परमबोधसमनुगत विपुलगुर्जरनृपान्वयप्रदीपतामु-
पगत , समधिगतपञ्चमहाशब्दमहाराजाधिराजश्रीमद्दद्दः कुशली सर्वानेव
राष्ट्रपतिविषयपतिग्रामकूटायुक्तकनियुक्तकाधिकमहत्तरादीन्समाज्ञापयति—
अस्तु वो विदित यथा मया मातापित्रोरात्मनश्चैवामुष्मिकपुण्ययशोभिवृद्धये
कान्यकुब्जवास्तव्यतच्चातुर्विद्यसामान्यवशिष्ठसगोत्रबह्वृचसब्रह्मचारिभट्टम-
हीधरस्तस्य सूनुर्भट्टमाधवाय बलिचरुवैश्वदेवाग्निहोत्रपञ्चमहायज्ञादिक्रत्वो-
त्सर्पणार्थं कमनीयषोडशशतमुत्तयन्त'पातिनिगुडग्रामः। अस्याघाटस्थाना-
नि—पूर्वस्या दिशि वघौरिग्राम., दक्षिणस्या दिशि फलहवद्रहग्राम', प्र-
तीच्या दिशि विहृाणग्राम , उत्तरस्या दिशि दहिथलिग्राम , एवमय स्वच-
तुराघाटनविशुद्धो ग्राम सोद्रङ्ग सपरिकर' सधान्यहिरण्यादेय सोत्पद्य-
मानविष्टिकः समस्तराजकीयानामप्रवेश्य आचन्द्रार्णवक्षितिसरित्पर्वतसमका-
लीन पुत्रपौत्रान्वयक्रमोपभोग्य. पूर्वप्रत्तदेवब्रह्मदायवर्जमाभ्यन्तरसिद्ध्या
शकनृपकालातीतसवत्सरशतचतुष्टये (४००=A D 479) वैशाखपौर्ण-
मास्यामुदकातिसर्गेण प्रतिपादित यतोऽस्योचितया ब्रह्मदायस्थित्या कृषत'
कर्षयतो भुञ्जतो भोजयत प्रतिदिशतो वा नव्यासेध. प्रवर्तितव्यस्तथागा-
मिभिरपि नृपतिभिरस्मद्वंश्यैरन्यैर्वा सामान्यभूमिदानफलमवेत्य बिन्दूल्लोला-
न्यनित्यान्यैश्वर्याणि तृणाग्रलग्नजलबिन्दुचञ्चल च जीवितमाकलय्य स्वदाय-
निर्विशेषोऽयमस्मद्दायोऽनुमन्तव्यः पालयितव्यश्च ॥

तथा चोक्तम्—

बहुभिर्वसुधा भुक्ता राजभि' सगरादिभि ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

यश्चाज्ञानतिमिरवृत्तमतिराच्छिन्द्यादाच्छिद्यमानमनुमोदेत वा स पञ्च-
भिर्महापातकैश्चोपपातकैश्च सयुक्त स्यादिति । उक्त च भगवता वेदव्या-
सेन व्यासेन—

षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिद' ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

यानीह दत्तानि पुरातनानि दानानि धर्मार्थयशस्कराणि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधु पुनराददीत ॥
स्वदत्ता परदत्ता वा यत्नाद्रक्ष नराधिप ।
महीं महीमता श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥

लिखित चैतत्पादानुजीविश्रीबलाधिकृतगिलकसूनुना माधवभट्टेन । स्वहस्तोऽय मम श्रीवीतरागसूनो श्रीप्रशान्तरागस्य ॥

(इण्डियन् आण्टिक्केरी—७ । ६३–६४)

---

# (१६३)

## वलभीप्रभोर्महाराजगुहसेनस्य दानपत्रम् ।

(A D 559)

प्रसभप्रणतामित्राणा मैत्राणामतुलबलसपन्नमण्डलाभोगससक्तसप्रहारशतलब्धप्रतापः प्रतापोपनतदानमानार्जवोपार्जितानुरागानुरक्तमौलभृतमित्रश्रेणीबलावाप्तराज्यश्री. परममाहेश्वर श्रीसेनापतिभट्टार्कस्तस्य सुतस्तत्पादरजोरुणावनतपवित्रीकृतशिरा शिरोवनतशत्रुचूडामणिप्रभाविच्छुरितपादनखपङ्क्तिदीधितिर्दीनानाथकृपणजनोपजीव्यमानविभवः परममाहेश्वर॰ श्रीसेनापतिधरसेनस्तस्यानुजस्तत्पादाभिप्रणामप्रशस्ततरविमलमौलिमणिर्मन्वादिप्रणीतविधिविधानधर्मा धर्मराज इव विहितविनयव्यवस्थापद्धतिरखिलभुवनमण्डलाभोगैकस्वामिना परमस्वामिना स्वयमुपहितराज्याभिषेकः परममाहेश्वरः श्रीमहाराजद्रोणसिंहः सिंह इव तस्यानुजस्वभुजबलपराक्रमेण परगजघटानीकानामेकविजयी शरणैषिणामशरणमवबोद्धा शास्त्रार्थतत्त्वाना कल्पतरुरिव सुहृदयप्रणयिना यथाभिलषितकामफलोपभोगद परमभट्टारकपादानुध्यातः परमभागवत. श्रीमहाराजध्रुवसेनस्तत्पादाभिप्रणामप्रभविप्रक्षालिताशेषकल्मषः कृष्ण इव निरस्तारातिसेनासगर सागर इव विशुद्धाद्रणमहार्हरत्नपूरण. पूर्णचन्द्र इव सर्वजनतादर्शनाभिराम. परममाहेश्वर॰ श्रीमहाराजगुहसेनः । कुशली सर्वानेक॰ ॰ ॰　　॰॰॰

---

१ इद च दानपत्रमेकस्मात्पण्डितवरादुपलब्धमिति G Buhler महाशयवरा

.. .... ... ...... ... . . 'राजस्थानीयामात्ययुक्तकविनियुक्त-द्राङ्गिकचाटभट' .. .. .... ।दीनन्याश्च यथा सबध्यमान ' .. ....वलभीपुरे पूज्यदुड्डाकारितविहारस्य क . .... ...प्रत्याय सर्वहिरण्यादेय सदशापराध' सह .. र श्व ' .... चरो वर्तेषु चतुर्षु मातापित्रो पुण्याप्यायननिमित्तमात्मनश्चैहिकामुष्मिकफलावाप्तये .... ...... . . . .

तस्य गन्धपुष्पधूपदीपतैलादिक्रियोत्सर्पणार्थं सद्धर्मस्य पुस्तकोपक्र ' .. ....... ।नादेशसमत्वागताष्टानिकायाभ्यन्तरार्यभिक्षुसङ्घस्य चीविरपिण्डपात .... . भ ' जायविहारस्य च खण्डस्फुटितविशीर्णप्रतिसस्कारणार्थमाचन्द्रार्कार्णवक्षितिस्थितिसरित्पर्वतसमकालीन , भूमिच्छिद्रन्यायेन सोदकेन कमण्डलुना विसृष्टो यतोऽस्योचित . . . .. परिपन्थना वाकार्यागामिनृपतिभिश्चानित्यान्यैश्वर्याण्यस्थिर मानुष्य सामान्य च भूमिदानफलमवगच्छद्भिरयमसद्दायोऽनुमन्तव्य' पालयितव्यश्च । यश्चाछिन्द्यादाच्छिद्यमान वानुमोदेत स पञ्चभिर्महापातकै सोपपातकै. सयुक्तः स्यात् । अपि चात्र श्लोका भवन्ति—

यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधु' पुनराददीत ॥

विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिन ।
कृष्णाहयो हि जायन्ते पूर्वदाय हरन्ति ये ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
गवा शतसहस्रस्य हन्तु प्राप्नोति किल्बिषम् ॥ इति ।

दूतकोऽत्र .. पुत्रविष्णुसिहेनेति । स्वहस्तो मम श्रीमहाराजगुहसेनस्य । [1]सवत् २४० श्रावणशु० ' ..

(इण्डियन् आण्टिक्केरी—७ । ६७-६८)

---

१ वलभीसवत्सरोऽयम् २४० अत्र ३१९ मितवर्षेषु योजितेषु ५५९ मित खिस्ताब्दो बोध्य

## (१६४)

## वलभीप्रभोः श्रीधरसेनमहाराजानां द्वितीयं दानपत्रम् ।

(A D 571)

ॐ स्वस्ति वलभीत प्रसभप्रणतामित्राणा मैत्रकाणामतुलबलसपन्नमण्डलाभोगसंसक्तसप्रहारशतलब्धप्रताप प्रतापोपनतदानमानार्जवोपवर्जितानुरागानुरक्तमौलिभृतमित्रश्रेणीबलावाप्तराज्यश्री परममाहेश्वर श्रीसेनापतिभट्टार्कस्तस्य सुतस्तत्पादरजोरुणावनतपवित्रीकृतशिरा शिरोवनतशत्रुचूडामणिप्रभाविच्छुरितपादनखपङ्क्तिदीधितिर्दीनानाथकृपणजनोपजीव्यमानविभवपरममाहेश्वर श्रीसेनापतिधरसेनस्तस्यानुजस्तत्पादप्रणामप्रशस्ततरविमलमौलिमणिर्मन्वादिप्रणीतविधिविधानधर्मा धर्मराज इव विहितविजयव्यवस्थापद्धतिरखिलभुवनमण्डलाभोगैकस्वामिना **परमस्वामिना** स्वयमुपहितराज्याभिषेको महाविश्रणनावपूतराजश्रीपरममाहेश्वरमहाराजश्री**द्रोणसिंह** सिंह इव तस्यानुज स्वभुजबलपराक्रमेण परगजघटानीकानामेकविजयी शरणैषिणा शरणमवबोद्धा शस्त्रार्थतत्त्वाना कल्पतरुरिव सुहृत्प्रणयिना यथाभिलषितफलोपभोगद परमभागवतो महाराज**ध्रुवसेन**स्तस्यानुजस्तच्चरणारविन्दप्रणतिप्रविधौताशेषकल्मष सुविशुद्धस्वचरितोदकक्षालितसकलकलिकलङ्क॰ प्रसभनिजितारातिपक्षप्रथितमहिमा परमादित्यभक्त श्रीमहाराज**धरपट्ट**स्तस्यात्मजस्तत्पादसपर्यावाप्तपुण्योदय. शैशवात्प्रभृतिखड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणतारातिचूडारत्नप्रभासंसक्तसव्यपादनखरश्मिसहति सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनादन्वर्थराजशब्दो रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसपद्भि स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयान. शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफल.

१ इद च दानपत्र **काठियावाड**राष्ट्रान्तर्गत**सुराथपुरे** Mı Bau'ddın, Dıvan of H H the Navab of Junâgadhत सप्राप्तमिति G Buhleı महाशयवरा

प्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदयः पादचारीव सकलभुवनमण्डलाभोगप्रमोदः परममाहेश्वरः श्रीमहाराज**गुहसेन**स्तस्य सुतस्तत्पादनखसतानविसृतजाह्नवीजलौघनिक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजीव्यमानभोगसपद्रूपलोभादिवाश्रितः सरभसमाभिगामिकैर्गुणैः सहजशक्तिशिक्षाविशेषविस्मापिताखिलधनुर्धरः प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मादायादानामपाकर्ता प्रजोपघातकारिणामुपप्लवानां दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य संहताराातिपक्षलक्ष्मीक्षोभदक्षविक्रमो विक्रमोपसंप्राप्तविमलपार्थिवश्रीः परममाहेश्वरो महाराजश्री**धरसेन**ः कुशली सर्वानेवायुक्तकद्राङ्गिकमहत्तरभटचाटभटध्रुवाधिकरणिकदण्डपाशिकभोगाधरणिकशौल्किकवर्त्मपलप्रतिसरकराजस्थानीयकुमारामात्यादीश्चानन्याश्च यथा सबध्यमानकान्समाज्ञापयति—अस्तु वः संविदितम्—यथा मया मातापित्रोः पुण्याप्यायनायात्मनश्चैहिकामुष्मिकयथाभिलषितफलावाप्तये **सूर्य[आर्य]दास**ग्रामे दक्षिणपूर्वसीम्नि पदावर्थशतद्वयवापी च ज्योतिपद्रक्रमे उत्तरपूर्वसीम्नि क्षेत्रपादावर्तशतद्वयविंशोत्तरः, **लेशुदक**ग्रामे खट्टखट्टावर्तितपादावर्ती पञ्चत्रिंशः, एतसोद्रङ्गः सोपरिकरः सवातभूतधानहिरण्यादेयः सोत्पद्यमानविष्टिकः समस्तराजकीयानामहस्तप्रक्षेपणीयः भूमिच्छिद्रन्यायेन **शाण्डिल्य**सगोत्र**च्छन्दोगकौथुम**सब्रह्मचारिब्राह्मण**दुशाय** तथा ब्राह्मणषष्ठ्ये बलिचरुवैश्वदेवाग्निहोत्रातिथिपञ्चमहायज्ञिकानां क्रियाणां समुत्सर्पणार्थमाचन्द्रार्कार्णवसरित्क्षितिसमकालीनः पुत्रपौत्रान्वयभोग्यमुदकसर्गेण ब्रह्मदायं निसृष्टः यतोऽस्योचितया ब्रह्मदेयस्थित्या भुञ्जतः कृषतः कर्षयतः प्रदिशतो वा न कैश्चित्प्रतिषेधे वर्तितव्यमागामिभद्रनृपतिभिश्चास्मद्वंशजैरनित्यान्यैश्वर्याण्यस्थिरं मानुष्यं सामान्यं च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्च। यश्चैनमाच्छिन्द्यादाच्छिद्यमानं वानुमोदेत स पञ्चभिर्महापातकैः सोपपातकैश्च संयुक्तः स्यादिति। उक्तं च भगवता **वेदव्यासेन** व्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥

पूर्वदत्ता द्विजातिभ्यो यत्नाद्रक्ष युधिष्ठिर ।
महीं महीभृतां श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥

लिखितं संधिविग्रहाधिकृतस्कन्धभट्टेन । स्वहस्तो मम महाराजश्री-**धरसेनस्य** ॥ दु० चिब्बिर सं० २५२ वैशाख व० १५ ॥

(इण्डियन् आण्टिक्केरी—७ । ६८–७०)

---

# (१६९)

## वलभीप्रभोः श्रीधरसेनमहाराजानां तृतीयं दानपत्रम् ।

(A D 589)

ॐ स्वस्ति विजयस्कन्धावारात् भर्तृटाटनकवासकात् प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसपन्नमण्डलाभोगससक्तसप्रहारशतलब्धप्रताप प्रतापोपनतदानमानार्जवोपार्जितानुरागानुरक्तमौलभृतमित्रश्रेणिबलावाप्तराज्यश्री परममाहेश्वर श्रीसेनापतिभट्टार्कस्तस्य सुतस्तत्पादरजोरुणावनतपवित्रीकृतशिरा शिरोवनतशत्रुचूडामणिप्रभाविच्छुरितपादनखपङ्क्तिदीधिति, दीनानाथकृपणजनोपजीव्यमानविभव, परममाहेश्वर श्रीसेनापति**धरसेन**स्तस्यानुजस्तत्पादप्रणामप्रशस्ततरविमलमौलिमणिर्मन्वादिप्रणीतविधिविधानधर्मा धर्मराज इव विनयविहितव्यवस्थापद्धतिरखिलभुवनमण्डलाभोगैकस्वामिना **परमस्वामिना** स्वयमुपहितराज्याभिषेकमहाविश्राणनावपूतराज्यश्रीः परममाहेश्वरो महाराजश्री**द्रोणसिंहः** सिंह इव तस्यानुज स्वभुजबलपराक्रमेण परगजघटानीकानामेकविजयी शरणैषिणां शरणमवबोद्धा शास्त्रार्थतत्वानां कल्पतरुरिव सुहृत्प्रणयिनां यथाभिलषितकाम-

---

१ इदं च दानपत्रं **काठियावाडराष्ट्रान्तर्गतसुराथपुरे** Mı Bau'ddın, Dıvan of H H the Nıvab of Junâgadhत समुपलब्धमिति G Buhleı महाशया

फलभोगदः परमभागवतो महाराजश्री**ध्रुवसेन**स्तस्यानुजस्तच्चरणारविन्द-प्रणतिप्रविधौतावशेषकल्मष सुविशुद्धस्वचरितोदकप्रक्षालिताशेषकलिकलङ्कः प्रसभनिर्जितारातिपक्षप्रथितमहिमा परमादित्यभक्तो महाराजश्री-**धरपट्ट**स्तस्य सुतस्तत्पादसपर्यावाप्तपुण्योदय' शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणतारातिचूडारत्नप्रभाससक्तसव्यपादनखरश्मिसहति. सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनादन्वर्थराजशब्दोऽभिरूपकान्ति.स्थैर्यधैर्यगाम्भीर्यसपद्भिः स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयानः, शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफल. प्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदय' पादचारीव सकलभुवनमण्डलाभोगप्रमोद परममाहेश्वरो महाराजश्री**गुहसेन**स्तत्पादनखमयूखसतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मष. प्रणयिशतसहस्रोपजीव्यमानभोगसपद्रूपल्लोभादिवाश्रितः सरभसमाभिगामिकैर्गुणैः सहजशक्तिविशेषविस्मापिताखिलधनुर्धरः प्रथमनरपतिसृष्टानामनुपालयिता धर्मादायादानामपाकर्ता प्रजोपघातकारिणामुपप्लवाना दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य सहतारातिपक्षलक्ष्मीपरिभोगदक्षविक्रमोपसप्राप्तविमलपार्थिवश्री परममाहेश्वरो महासामन्तमहाराजश्री**धरसेनः** कुशली सर्वानेव स्वानायुक्तकविनियुक्तकद्राङ्गिकवामहत्तरभटचारभटध्रुवाधिकरणिकशौल्किकचोरोद्धरणिकदण्डपाशिककाथेवरिकविषयपतिराजस्थानीयोपरिकुमारामात्यहस्त्यश्वारोहादीनन्याश्च यथा सबध्यमानकान् समनुदर्शयति—अस्तु व. सविदितम्—यथा मया मातापित्रो. पुण्याप्यायनायात्मनश्चैहिकामुष्मिकयथाभिलषितफलावाप्तये **आनर्तपुरविनिगर्तखेटक**-निवासिसर्कराक्षिसगोत्रबह्वृचसब्रह्मचारिब्राह्मण …मित्रपुत्रब्राह्मण**विष्णु-मित्राय** खेटकाहारविषये वण्डरिजिद्रिपथकान्तर्गत**अशिलापल्लिका**-ग्राम. सोद्रङ्ग' सपरिकरः सवातभूतप्रत्याय सधान्यभागभोगहिरण्यदेयः सोत्पद्यमानविष्टिकः सदशापराध. समस्तराजकीयानामहस्तप्रक्षेपणीयो भूमिच्छिद्रन्यायेन बलिचरुवैश्वदेवाग्निहोत्रातिथिपञ्चमहायज्ञिकाना क्रियाना

समुत्सर्पणार्थमाचन्द्रार्कार्णवसरित्क्षितिस्थितिपर्वतसमकालीनं पुत्रपौत्रान्वयभोग्यमुदकातिसर्गेण ब्रह्मदायो निसृष्टो यतोऽस्योचितया ब्रह्मदेयस्थित्या भुञ्जतः कृषत कर्षयतं प्रदिशतो वा न कैश्चिद् व्याघाते वर्तितव्यमागामिभद्रनृपतिभिरस्मद्वंशजैरन्यैर्वानित्यान्यैश्वर्याण्यस्थिर मानुष्य सामान्य च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्य परिपालयितव्यश्च । यश्चैनमाच्छिन्द्यादाच्छिद्यमान वानुमोदेत स पञ्चभिर्महापातकै सोपपातकैश्च सयुक्तं स्यादिति । उक्त च भगवता **वेदव्यासेन** व्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिद ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
बहुभिर्वसुधा भुक्ता राजभि सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिन ।
कृष्णाहयो हि जायन्ते ब्रह्मदेयापहारका ॥
स्वदत्ता परदत्ता वा यो हरेत वसुधराम् ।
गवा शतसहस्रस्य हन्तु प्राप्नोति किल्बिषम् ॥
पूर्वदत्ता द्विजातिभ्यो यत्नाद्रक्ष युधिष्ठिर ।
मही महीभृता श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधु पुनराददीत ॥

इति । स्वहस्तो महाराजश्री**धरसेनस्य** । दु० **सामन्तशीलादित्य** । लिखित सधिविग्रहाधिकरणाधिकृतदिविरपति**स्कन्धभट्टेन** ॥ संवत् २७० फाल्गुन व० १० ॥

(इण्डियन् आण्टिक्केरी—७ । ७१–७३)

---

# (१६६)

## वलभीप्रभोः श्रीधरसेनमहाराजानां चतुर्थं दानपत्रम्[1]।

(A D 449)

ॐ स्वस्ति विजयस्कन्धावाराद्भर 'वासकात्प्रसभप्रणतामित्राणा मैत्रकाणामतुलबलसपन्नमण्डलाभोगससक्तसंप्रहारशतलब्धप्रतापात्प्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतश्रेणिबलावाप्तराज्यश्रिय परममाहेश्वरश्रीभट्टार्कादव्यवच्छिन्नराजवशान्मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मषः शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणतारातिचूडारत्नप्रभाससक्तपादनखरश्मिसहति. सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनादन्वर्थराजशब्दो रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसपद्भि सरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयान. शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफल प्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदय' पादचारीव सकलभुवनमण्डलाभोगप्रमोद परममाहेश्वर. श्रीगुहसेनस्तस्य सुतस्तत्पादनखमयूखसतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजीव्यमानसंपद्रूपलोभादिवाश्रित. सरभसमाभिगामिकैर्गुणै' सहजशक्तिशिक्षाविशेषविस्मापिताखिलधनुर्धरः प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मादायादानामपाकर्ता प्रजोपघातकारिणामुपप्लवाना दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य सहतारातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसम्प्राप्तविमलपार्थिवश्री. परममाहेश्वर श्रीधरसेनस्तस्य सुतस्तत्पादानुध्यात. सकलजगदानन्दनात्यद्भुतगुणसमुदयस्थगितसमग्रदिङ्मण्डल. समरशतविजयशोभासनाथमण्डलाग्रद्युतिभासुरतरान् सपीठो व्यूढगुरुमनोरथमहाभारः सर्वविद्यापरापरविभागाधिगम-

---

१. इद दानपत्रमेकस्माद्वैश्यवरादुपलब्धमिति G. Buhler महाशयर्वरा

विमलमतिरपि सर्वत सुभाषितलवेनापि सुखोपपादनीयपरितोष॰ समग्रलोकागाधगाम्भीर्यहृदयोऽपि सुचरितातिशयसुव्यक्तपरमकल्याणस्वभाव खिलीभूतकृतयुगनृपतिपथविशोधनाधिगतोदग्रकीर्तिर्धर्मानुरोधोज्ज्वलतरीकृतार्थसुखसपदुपसेवानिरूढ**धर्मादित्य**द्वितीयनामा परममाहेश्वर. **श्रीशीलादित्य**स्तस्यानुजस्तत्पादानुध्यात स्वयमुपेन्द्रगुरुणेव गुरुणात्यादरवता समभिलषणीयामपि राजलक्ष्मीं स्कन्धासक्ता परमभद्र इव धुर्यस्तदाज्ञासपादनैकरसतयेवोद्वहन् खेदसुखरतिभ्यामनायासितसत्त्वसपत्ति. प्रभावसपद्वशीकृतनृपतिशतसहस्रोपजीव्यमानसपद्रूपलोभादिवाश्रित सरभसमाभिगामिकैर्गुणै. सहजशक्तिशिक्षाविशेषविस्मापिताखिलधनुर्धर॰ प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मदायानामपाकर्ता प्रजोपघातकारिणामुपप्लवाना दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य सहताराातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसप्राप्तविमलपार्थिवश्री परममाहेश्वर **श्रीखरग्रह**स्तस्य तनयस्तत्पादानुध्यात सकलविद्याधिगमविहितनिखिलद्विजजनमन परितोषातिशय सत्त्वसंपदात्यागौदार्येण च विगतानुसंधानसमाहितारातिपक्षमनोरथाक्षभङ्ग सम्यगुपलक्षितानेकशास्त्रकलालोकचरितगह्वरविभागोऽपि परमभद्रप्रकृतिरकृत्रिमप्रश्रयविनयशोभाविभूषण॰ समरशतजयपताकाहरणप्रत्यग्रोदग्रबाहुदण्डविध्वसितनिखिलप्रतिपक्षदर्पोदय. स्वधनु.प्रभावपरिभूतास्त्रकौशलाभिमानसकलनृपतिमण्डलाभिनन्दितशासन परममाहेश्वर **श्रीधरसेन**स्तस्यानुजस्तत्पादानुध्यात. सच्चरितातिशयितसकलपूर्वनरपतिप्रतिदु॰साधानामपप्रसाधयिता विषयाणा मूर्तिमानिव पुरुषकार परिवृद्धगुणानुरागनिर्भरचित्तवृत्तिभिर्मनुरिव स्वयमभ्युपपन्न॰ प्रकृतिभिरधिगतकलाकलापः कान्तिमान् निर्वृतिहेतुरकलङ्ककुमुदनाथः प्राज्यप्रतापास्थगितदिगन्तरालप्रध्वसितध्वान्तराशि सततोदितसविता प्रकृतिभ्य. पर प्रत्ययमर्थवन्तमति बहुतिथिप्रयोजनानुबन्धमागमपरिपूर्णं विदधान॰ सधिविग्रहसमासनिश्चयनिपुणः स्थानेऽनुरूपमादेश ददद्गुणवृद्धिविधानजनितसस्कारः साधूना राज्यशालातुरीयतन्त्रयोरुभयोरपि निष्णात॰ प्रकृष्टविक्र-

१ शालातुरीय पाणिनि

मोऽपि करुणामृदुहृदय श्रुतवानप्यगर्वित कान्तोऽपि प्रशमी स्थिरसौ-
हृदयोऽपि निरसिता दोषवतामुदयसमयसमुपजनितजनतानुरागपरिपिहि-
तभुवनसमर्थितप्रथित**बालादित्य**द्वितीयनामा परममाहेश्वर **श्रीध्रुवसेन**-
स्तस्य सुतस्तत्पादकमलप्रणामधरणिकषणजनितकिणलाञ्छनघनललाटच-
न्द्रशकलः शिशुभाव एव श्रवणनिहितमौक्तिकालकारविभ्रमामलश्रुतवि-
शेषः प्रदानसलिलक्षालिताग्रहस्तारविन्द' कन्याया इव मृदुकरग्रहणाद-
मन्दीकृतानन्दविधिर्वसुधराया कार्मुकधनुर्वेद इव सभाविताशेषलक्ष्यक-
लापः प्रणतसामन्तमण्डलोत्तमाङ्ग धृतचूडारत्नायमानशासन परममाहेश्वर
परमभट्टारकमहाराजाधिराजपरमेश्वरचक्रवर्तिश्री**धरसेन** कुशली सर्वानेव
समाज्ञापयति—अस्तु व. सविदितम्—यथा मया मातापित्रोः पुण्याप्या-
यनाया**नर्तपुर**विनिर्गत**कासरग्राम**निवास**स्यानर्तपुर**चातुर्विद्यसामान्यस-
केराक्षिसगोत्रबह्वृचसब्रह्मचारिब्राह्मण**केशव**मित्रपुत्रब्राह्मण**नारायण**मित्रा-
य खेटकाहारे सिंहपल्लिकापथके **देसुरक्षितिज**ग्रामः सोद्रङ्ग सोपरिकङ्क
सभूतवातप्रत्याय. सधान्यहिरण्यादेयः सदशापराधः सोत्पद्यमानविष्टिक.
सर्वराजकीयानामहस्तप्रक्षेपणीय पूर्वप्रत्तदेवब्रह्मदेयब्राह्मणविशतिरहित
भूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीन' पुत्रपौत्रान्वय-
भोग्य., उदकातिसर्गेण धर्मदायो निसृष्टः, यतोऽस्योचितया ब्रह्मदेयाग्रहा
रस्थित्या भुञ्जतः कृषतः कर्षयत. प्रदिशतो वा न कैश्चिद्व्यासेधे वर्तितव्य-
मागामिभद्रनृपतिभिरप्यस्मद्वशजैरन्यैर्वा, अनित्यान्यैश्वर्याण्यस्थिर मानुष्य
सामान्य च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्य परिपाल-
यितव्यश्चेति । उक्त च—

बहुभिर्वसुधा भुक्ता राजभि सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधु. पुनराददीत ॥
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिद ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

दूतकोऽत्र राजदुहितृभूपा(?) । लिखितमिद सधिविग्रहाधिकृतदिविरपति- चन्द्रभट्टिपुत्रदिविरपतिश्रीस्कन्दभट्टेनेति । स० ३३० मार्गशिर शु० ३ । स्वहस्तो मम ॥

(इण्डियन् आण्टिक्वेरी—७ । ७३–७५)

# (१६७)

## वलभीप्रभोः श्रीखरग्रहमहाराजानां दानपत्रम्[1] ।

(A D 656)

ॐ स्वस्ति विजयस्कन्धावारात् पूलेण्डकवासकात् प्रसभप्रणतामित्राणा मैत्रकाणामतुलबलसपन्नमण्डिलाभोगससक्तप्रहारशतलब्धप्रतापात् प्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतश्रेणीदलावाप्तराज्यश्रिय परममाहेश्वरश्रीभट्टार्कादव्यवच्छिन्नराजवशत(?)मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मष शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणतारातिचूडारत्नप्रभाससक्तपादनखरश्मिसहति सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनान्वर्थराजशब्दो रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसपद्भि' स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयान शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफलप्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदय पादचारीव सकलभुवनमण्डलाभोगप्रमोद परममाहेश्वर श्रीगुहसेनस्तस्य सुतस्तत्पादनखमयूखसतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मष. प्रणयिशतसहस्रोपजीव्यमानसपद्रूपलोभादिवाश्रितसरभसमाभिगामिकैर्गुणै. सहजशक्तिशिक्षाविशेषविस्मापिताखिलधनुर्धर प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मादायानामपाकर्ता प्रजोपघातकारिणामुपप्लवाना दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य सहताराातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसप्राप्तविमलपार्थिव श्रीपरममाहेश्वर' श्रीधरसेनस्तस्य सुतस्तत्पादानु-

[1] इद दानपत्रमेकस्माद्वैश्यवरात्सप्राप्तमिति G Buhler विद्वद्वतसवरा

ध्यातसकलजगदानन्दनात्यद्भुतगुणसमुदयस्थगितसमग्रदिङ्मण्डलः समर-शतविजयशोभासनाथमण्डलाग्रद्युतिभासुरतरांसपीठो व्यूढगुरुमनोरथमहा-भारः सर्वविद्यापरापरविभागधिगाविमलमतिरपि सर्वतः सुभाषितलवेनापि सुखोपपादनीयपरितोषसमग्रलोकागाधगाम्भीर्यहृदयोऽपि सुचरितातिशयसु-व्यक्तपरमकल्याणस्वभावः खिलीभूतकृतकृतयुगनृपतिपथविशोधनाधिगतो-दग्रकीर्तिधर्मानुपरोधोज्ज्वलतरीकृतार्थसुखसंपदुपसेवानिरूढधर्मादित्यद्वि-तीयनामा परममाहेश्वरः श्रीशिलादित्यस्तस्यानुजस्तत्पादानुध्यातः स्वयमु-पेन्द्रगुरुणेव गुरुणात्यादरवता समभिलाषिणीयामपि राजलक्ष्मीं स्कन्धसक्तां परमभद्र इव धुर्यस्तदाज्ञासंपादनैकरसतयैवोद्वहन्खेदसुखसंपत्तिभ्यामनाया-सितसत्त्वसंपत्तिप्रभावसंपद्वशीकृतनृपतिशतशिरोरत्नच्छायोपगूढपादपीठो-ऽपरावज्ञाभिमानरसानालिङ्गितमनोवृत्तिप्रणतिमेकां परित्यज्य प्रख्यातपौरुषा-भिमानैरप्यरातिभिरनासादितप्रतिक्रियोपायकृतनिखिलभुवनामोदगुणसंह-तिप्रसभविघटितसकलकलिविलसितगतिर्नीचजनाभिरोहिभिरशेषैर्दोषैरनामृ-ष्टात्युन्नतहृदयः प्रख्यातपौरुषास्त्रकौशलातिशयगणतिथिविपक्षक्षितिपतिल-क्ष्मीस्वयंग्राहप्रकाशितप्रवीरपुरुषप्रथमसंख्याधिगमः परममाहेश्वरः श्रीखर-ग्रहस्तस्य तनयस्तत्पादानुध्यातः सकलविद्याधिगमविहितनिखिलविद्वज्जन-मनःपरितोषातिशयः सत्त्वसंपदा त्यागौदार्येण च विगतानुसंधानाशमा-हितारातिपक्षमनोरथाक्षभङ्गः सम्यगुपलक्षितानेकशास्त्रकलालोकचरितगह्व-रविभागोऽपि परमभद्रप्रकृतिरकृत्रिमप्रश्रयविनयशोभाविभूषणः समरशतज-यपताकाहरणप्रत्यलोदग्रबाहुदण्डविध्वंसितनिखिलप्रतिपक्षदर्पोदयः स्वधनुः-प्रभावपरिभूतास्त्रकौशलाभिमानसकलनृपतिमण्डलाभिनन्दितशासनपरम-माहेश्वरः श्रीधरसेनस्तस्यानुजस्तत्पादानुध्यातसच्चरित्रातिशयितसकलपूर्व-नरपतिरतिदुःसाधानामपि प्रसाधयिता विषयाणां मूर्तिमानिव पुरुषकारः परि-वृद्धगुणानुरागनिर्भरचित्तवृत्तिभिर्मनुरिव स्वयमभ्युपपन्नः प्रकृतिभिरधिगत-कलाकलापः कान्तिमान्निर्वृतिहेतुरकलङ्कः कुमुदनाथः प्राज्यप्रतापस्थगित-दिगन्तरालप्रध्वंसितध्वान्तराशिः सततोदितः सविता प्रकृतिभ्यः परं प्रत्ययमर्थवन्तमतिबहुतिथिप्रयोजनानुबन्धमागमपरिपूर्णं विदधानः संधि-

विग्रहसमासनिश्चयनिपुण स्थानेऽनुरूपमादेश ददद्गुणवृद्धिविधानजनि-
तसस्कार साधूना राज्यशालातुरीयतन्त्रयोरुभयोर्निष्णात प्रकृष्टविक्रमोऽपि
करुणामृदुहृदयः श्रुतवानप्यगर्वितकान्तोऽपि प्रशमी स्थिरसौहृदयोऽपि नि-
रसिता दोषवतामुदयसमयसदुपजनितजनतानुरागपरिपिहितभुवनसमर्थित-
प्रथितबालादित्यद्वितीयनामा परममाहेश्वरः श्रीध्रुवसेनस्तस्य सुतस्तत्पा-
दकमलप्रणामधरणिकषणजनितकिणलाञ्छनललाटचन्द्रशकल· शिशुभाव
एव श्रवणनिहितमौक्तिकालङ्कारविभ्रमामलश्रुतविशेषप्रदानसलिलक्षालिताग्र-
हस्तारविन्दकन्याया इव मृदुकरग्रहणादमन्दीकृतानन्दविधिर्वसुधराया·
कार्मुके धनुर्वेद इव सशोधिताशेषलक्ष्यकलापः प्रणतसामन्तमण्डलोत्तमा-
ङ्गधृतचूडारत्नायमानशासन परममाहेश्वरपरमभट्टारकमहाराजाधिराजपर-
मेश्वरचक्रवर्तिश्रीधरसेनस्तत्पितामहभ्रातृश्रीशीलादित्यस्य शार्ङ्गपाणेरिवा-
ङ्गजन्मनो भक्तिबन्धुरावयवकल्पितप्रणतेरतिधवलतया दूर तत्पादारविन्द-
प्रवृत्तया नखमणिरुचा मन्दाकिन्येव नित्यममलितोत्तमाङ्गदेशस्यागस्त्यस्येव
राजर्षेर्दाक्षिण्यमातन्वानस्य प्रबलधवलिम्ना यशसा वलयेन मण्डितककुभा
नभसि यामिनीपतेर्विनिर्मिताखण्डपरिवेषमण्डलस्य पयोदश्यामशिखरचू-
चुकरुचिरसह्यविन्ध्य स्तनयुगाया· क्षितेः पत्युः श्रीदेरभटस्याङ्गज क्षि-
तिपसहतेरनुरागिण्या· शुचि(?)यशोंऽशुकभृत स्वयवरमालामिव राज्यल-
क्ष्मीमर्पयन्त्याः कृतपरिग्रह· शौर्यमप्रतिहति व्यापारमानमितप्रचण्डरिपुम-
ण्डलं मण्डलाग्रमिवावलम्बमान· शरदि प्रसभमाकृष्टशिलीमुखबाणासना-
पादितप्रसाधनाना परभुवा विधिवदाचरितकरग्रहणः पूर्वमेव विविधवर्णो-
ज्ज्वलेन श्रुतातिशयेनोद्भासितश्रवण· पुन·पुनरुक्तचक्रमेव रत्नालङ्कारे-
णालङ्कृतश्रोत्र· परस्फुरत्कटकविकटकीटपक्षरत्नकिरणविच्छिन्नप्रदानस-
लिलनिवहावसेकविलसन्नवशैवशैवलालङ्कारमिवाग्रपाणिमुद्वहन् धृतविशा-
लरत्नवलयजलधिवेलतटायमानभुजपरिष्वक्तविश्वभर· परममाहेश्वर· श्री-
ध्रुवसेनस्तस्याग्रज परमहीपतिस्पर्शदोषनाशनधियेव लक्ष्म्या स्वयम-
तिस्पष्टचेष्टमाश्लिष्टाङ्गयष्टिमतिरुचिरतरचरितगरिमपरिकलितसकलनरपतिर-
तिप्रकृष्टानुरागरसरभसवशीकृतप्रणतसामन्तसमन्तचक्रचूडामणिमयूखख-

चितचरणकमलयुगल प्रोद्दामोदारदोर्दण्डदलितद्विषद्वर्गदर्पः प्रसर्पत्पटीय' प्रतापप्लोषिताशेषशत्रुवश प्रणयिपक्षनिक्षिप्तलक्ष्मीक प्रेरितगदोत्क्षिप्तसुदर्शनचक्र परिहृतबालक्रीडोऽनध'कृतद्विजातिरेकविक्रमप्रसाधितधरित्रीतलोऽनङ्गीकृतजलशय्योऽपूर्वपुरुषोत्तम साक्षाद्धर्म इव सम्यगुपस्थापितवर्णाश्रमाचार परममाहेश्वरश्रीखरग्रह' कुशली सर्वानेव समाज्ञापयति—अस्तु व सविदित यथा—मया मातापित्रो पुण्याप्यायनायानन्दपुरविनिर्गतखेटकवास्तव्यनन्दपुरचातुर्विद्यसामान्यशकराक्षिसगोत्रबह्वृचसब्रह्मचारिब्राह्मणकेशवपुत्रब्राह्मणनारायणाय शिवभागपुरविषये घृतालयभूमौ पङ्गुलपल्लिकाग्राम सोद्रङ्ग' सपरिकर' सभूतवातप्रत्याय सधान्यहिरण्यादेय सदशपराध सोत्पद्यमानविष्टिक' सर्वराजकीयानामहस्तप्रक्षेपणीयः पूर्वप्रत्तदेवब्रह्मदेयब्राह्मणविंशतिरहितभूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनः पुत्रपौत्रान्वयभोग्य उदकातिसर्गेण धर्मदायो निसृष्टः । यतोऽस्योचितया ब्रह्मदेयस्थित्या भुञ्जत. कृषत' कर्षयत' प्रदिशतो वा न कैश्चिद्व्यासेधे वर्त्तितव्यम्। आगामिभद्रनृपतिभिरप्यस्मद्वंशजैरन्यैर्वा अनित्यान्यैश्वर्याण्यस्थिर मानुष्य सामान्य च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्चेति । उक्त च—

बहुभिर्वसुधा भुक्ता राजभि. सगरादिभि. ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिद' ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

दूतकोऽत्र प्रमातृश्रीना । लिखितमिद सधिविग्रहाधिकृतदिविरपतिश्रीस्कन्धभटपुत्रदिविरपतिश्रीमदनहिलेनेति । स० ३३७ आषाढ वदी ५। स्वहस्तो मम ॥

(इण्डियन् आण्टिक्वेरी—७ ।७६–७९)

# (१६८)

## गिरनारपर्वतस्थवस्तुपालतेजःपालजीर्णोद्धृतजैन-मन्दिरस्थः प्रथमः शिलालेखः ।

पायान्नेमिजिन. स यस्य कथितः स्वामीकृतागस्थिता-
वग्रे रूपदिदृक्षया स्थितवते प्रीते सुराणा प्रभौ ।
काये भागवते बने वक　द्विपोलावने शसता-
मिदृशा　मपि　वनाजवे　　　　॥

स्वस्ति श्रीविक्रमसवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदण-हिलपुरवास्तव्यप्राग्वाटान्वयप्रसूत ठ. श्रीचण्डपालात्मज ठ श्रीचण्डप्र-सादाङ्गज ठ श्रीसोमतनुज ठ श्रीआशाराजनन्दनस्य ठ श्रीकुमार-देवीकुक्षिसंभूतस्य ठ श्रीलुणिग महं० श्रीमालदेवयोरनुजस्य मह० श्री-तेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे मह० श्रीललितादेवी-कुक्षिसरोवरराजहसायमाने मह० श्रीजयन्तसिहे सं० ७९ वर्षपूर्वं स्तम्भतीर्थमुद्राव्यापारान्व्यापृण्वति सति स० ७७ वर्षे श्रीशत्रुजयोज्जय-न्तप्रभृतिमहातीर्थयात्रोत्सवप्रभाविताविर्भूतश्रीमद्देवाधिदेवप्रसादासादितस-घाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजंश्रील-वणप्रसाददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महाराजश्रीवस्तुपालेन तथानुजेन सं० ७६ वर्षपूर्वं गुर्जरमण्डले धवलकक्कप्रमुखनगरेषु मुद्राव्यापारान्व्यापृण्वता मह० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीम-दणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलकक्कप्रमुखन-गरेषु तथान्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णो-द्धाराश्च कारिता. । तथा सचीवेश्वरश्रीवस्तुपालेन इह स्वय निर्मापित-श्रीशत्रुंजयमहातीर्थावतार श्रीमदादितीर्थकरश्रीऋषभदेवस्तम्भनकपु-रावतार श्रीपार्श्वनाथदेवसत्यपुरावतार श्रीमहावीरदेवप्रशस्तिसहित-कश्मीरावतार श्रीसरस्वतिमूर्तिदेवकुलिकाचतुष्टयजिनयुगलाम्बावलोक-

नाशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथदेवालङ्कृतदेवकुलिकाचतुष्टयतुरगा-धिरूढस्वपितामह ठ श्रीसोमनिजपितृ ठ श्रीआशाराजमूर्तिद्वितय-चारुतोरणत्रयश्रीनेमिनाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिसमन्वि-तसुखोद्धाटनकस्तम्भश्रीअष्टापदमहातीर्थप्रभृति अनेककीर्तनपरम्पराविरा-जिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे आत्मनस्तथा स्वसधर्मचारिण्या. प्राग्वाटजातीय ठ श्रीकान्हडपुत्र्या ठ राणुकुक्षिसं-भूताया मह० श्रीललितादेव्याः पुण्याभिवृद्धये श्रीनागेन्द्रगच्छे भट्टारक-श्रीमहेन्द्रसूरिसताने शिष्यश्रीशान्तिसूरिशिष्यश्रीआणन्दसूरिश्रीअमर-सूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालकरणप्रभुश्रीविजयसेनसूरिप्रतिष्ठित श्रीअजितनाथदेवादिविंशतितीर्थकरालङ्कृतोऽयमभिनवः समण्डपः श्रीसमे-द्रमहातीर्थावतारप्रासादः कारित' ।

पीयूषपूरस्य च वस्तुपालमन्त्रीशितुश्चायमियान्विभेदः ।
एकः पुनर्जीवयति प्रमीत प्रमीयमाण तु भुवि द्वितीयः ॥

श्रीदश्रीदयितेश्वरप्रभृतयः सन्तु क्वचित्तेऽपि ये
प्रीणन्ति प्रभविष्णवोऽपि विभवैर्नाकिंचन कचन ।
सोऽय सिञ्चति काञ्चनैः प्रतिदिन दारिद्र्यदावानल-
प्रम्लाना पृथिवीं नवीनजलदः श्रीवस्तुपालः पुनः ॥

भ्रात. पातकिना किमत्र कथया दुर्मन्त्रिणामेतया
येषा चेतसि नास्ति किंचिदपर लोकोपकार विना ।
नन्वस्यैव गुणान्गृणीहि गणशः श्रीवस्तुपालस्य य-
स्तद्विश्वोपकृतिव्रत चरति यत्कर्णेन चीर्ण पुरा ॥

भित्त्वा भानु भोजराजे प्रयाते श्रीमुञ्जेऽपि स्वर्गसाम्राज्यभाजि ।
एक. सप्रत्यर्थिना वस्तुपालस्तिष्ठत्यश्रुस्यन्दनिष्कन्दनाय ॥

चौलुक्यक्षितिपालमौलिसचिवत्वत्कीर्तिकोलाहल-
स्त्रैलोक्येऽपि विलोक्यमानपुलकानन्दाश्रुभिः श्रूयते ।
किं चैषा कलिदूषितापि भवता प्रासादवापीप्रपा-
कूपारामसरोवरप्रभृतिभिर्धात्री पवित्रीकृता ॥

स श्रीतेजःपालः सचिवश्चिरकालमस्तु तेजस्वी।
येन वय निश्चिन्ता चिन्तामणिनेव नन्दाम॥
लवणप्रसादपुत्रश्रीकरणे लवणसिंहजनकोऽसौ।
मन्त्रित्वमत्र कुरुता कल्पशत तरुकल्प ॥
पुरापातेन दैत्यारेर्भुवनोपरिवर्तिना।
अधुना वस्तुपालस्य हस्तेनाध॰ कृतो बलि ॥
दयिता ललिता देवी तनयमवीतनयमाप सचिवेन्द्रात्।
नाम्ना जयन्तसिंहं जयन्तमिन्द्रात्पुलोमपुत्रीव॥
एते श्रीगुर्जरेश्वरपुरोहित ठ. श्रीसोमेश्वरदेवस्य।
स्तम्भतीर्थेऽत्र कायस्थवंशे वाजडनन्दन॰।
प्रशस्तिमेतामलिखज्जैत्रसिंहभुवः सुधी ॥
वाड·····स्य तनूजेन सूत्रधारेण धीमता।
एषा कुमारसिंहेन समुत्कीर्णा प्रयत्नत॰॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादतः।
वस्तुपालान्वयस्यास्तु प्रशस्ति॰ स्वस्तिशालिनी॥

(गिरनार इन्स्क्रिप्शन्स् न० २। २१–२३)

---

## (१६९)

## गिरनारपर्वतस्थवस्तुपालतेजःपालजीर्णोद्धृतजैन-मन्दिरस्थो द्वितीयः शिलालेखः।

॰ य पु तयदुकूलक्षीरार्णवेन्दुर्जिनो
यत्पादाब्जपवित्रमौलिरसभश्रीरुज्जयन्तोऽप्ययम्।
धत्ते मूर्ध्नि निजप्रभुप्रसृमरोद्दामप्रभामण्डलो
विश्वक्षोणिभृदाधिपत्यपदवीं नीलातपत्रोज्ज्वलाम्॥

स्वस्ति श्रीविक्रमसवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणहिलपुर-वास्तव्यप्राग्वाटान्वयप्रसूत ठ श्रीचण्डपालात्मज ठ. श्रीचण्डप्रसादाङ्गज

ठ श्रीसोमतनुज ठ श्रीआशाराजनन्दनस्य ठ श्रीकुमरादेवीकुक्षिसंभूतस्य ठ श्रीलुणिग मह० ठ श्रीमालदेवयोरनुजस्य महं० ठ. श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे मह० ठ श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने मह० श्रीजयन्तसिंहे स० ७९ वर्षपूर्वं मुद्राव्यापार व्यापृण्वति सति स० ७७ वर्षे श्रीशत्रुंजयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सवप्रभाविताविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजश्रीलवणप्रसाददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन स० ७६ वर्षपूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारान्व्यापृण्वता मह० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथान्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिता । तथा सचिवेश्वरश्रीवस्तुपालेनेह स्वय निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थंकरश्रीऋषभदेवस्तम्भनकपुरावतार श्रीपार्श्वनाथदेवसत्यपुरावतार श्रीमहावीरदेवप्रशस्तिसहितकश्मीरावतार श्रीसरस्वतीमूर्तिदेवकुलिकाचतुष्टयजिनद्वयाम्बावलोकनाशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथदेवालकृतदेवकुलिकाचतुष्टयतुरगाधिरूढनिजपितामह ठ श्रीसोमनिजपितृ ठ श्रीआशाराजमूर्तिद्वितयचारुतोरणत्रयश्रीनेमिनाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिसमन्वितसुखोद्घाटनकस्तम्भश्रीअष्टापदमहातीर्थप्रभृति अनेककीर्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे आत्मनस्तथा स्वभार्यायाः प्राग्वाटज्ञातीय ठ श्रीकान्हडपुत्र्याः ठ. राणुकुक्षिसभूताया मह० श्रीसोखुकाया. पुण्याभिवृद्धये श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसताने शिष्यश्रीशान्तिसूरिशिष्यश्रीआणन्दसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालकरण श्रीविजयसेनसूरिप्रतिष्ठित श्रीऋषभदेवप्रमुखचतुर्विंशतितीर्थकरालकृतोऽयमभिनव. समण्डपः श्रीसंमेत(द)महातीर्थावतारप्रधानप्रासाद. कारितः ।

चेतः किं कलिकालसालसमहो किं मोहनो हस्यते
तृष्णे कृष्णमुखासि किं कथय किं विघ्नौघमोघो भवान्।
ब्रूमः किंतु सखे न खेलति किमप्यस्माकमुज्जृम्भित
सैन्य यत्किल वस्तुपालकृतिना धर्मस्य सवर्धितम्॥
य विधु वन्धवसिद्धमार्थिनः शत्र ‥ ।
…ण पश्यन्ति वर्ण्यता किमय मया॥
वैर विभूतिभारत्योः प्रभुत्वप्रणिपातयोः।
तेजस्विताप्रशमयो. शमित येन मन्त्रिणा॥
दीपः स्फूर्जति सज्जकज्जलमलस्नेह मुहु' सहर-
न्निन्दुर्मण्डलवृत्तखण्डनपरः प्रद्वेष्टि मित्रोदयम्।
शूर. क्रूरतरः परस्य सहते तेजो न तेजस्विन-
स्तत्केन मतिम ब्रवीमि सचिव श्रीवस्तुपालाभिधम्॥
आयाताः कति नैव यान्ति कति नो यास्यन्ति नो वा कति
स्थाने स्थाननिवासिनो भवपथे पान्थीभवन्तो जनाः।
अस्मिन्विस्मयनीयबुद्धिजलधिर्विध्वस्य दस्यूत्करे
कुर्वन्पुण्यनिधिं धिनोति वसुधा श्रीवस्तुपालः परम्॥
दभ्रेऽस्य वीरधवलक्षितिपस्य राज्यभारे धुरंधरधुरा ‥ ……।
श्रीतेजःपालसचिवे दधति स्वबन्धुभारोद्धृतावविधुरैकधुरीणभावम्॥
इह तेजपालसचिवो विमलितविमलाचलेन्द्रममृतभृतम्।
कृत्वानुपमसरोवरममरगणं प्रीणयाचक्रे॥

एते श्रीमलधारिश्रीनरचन्द्रसुरीणाम्।

इह वालिगसुतसहजिगपुत्रातकतनुजवाजडतनूजः।
अलिखदिमा कायस्थस्तम्भपुरीयध्रुवो जयन्तसिंहः॥
हरिमण्डपनन्दीश्वरशिल्पीश्वरसोमदेवपौत्रेण।
बकुलस्वामिसुतेनोत्कीर्णा पुरुषोत्तमेनेयम्॥

वस्तुपालस्य प्रशस्तिरियं ६०३ महामात्यवस्तुपालभार्यामहम्(?) श्रीसोखुकाया धर्मस्थानमिदम् ।

(गिरनार इन्स्क्रिप्शन्स् न० २ । २३–२४)

---

# (१७०)

## गिरनारपर्वतस्थवस्तुपालतेजःपालजीर्णोद्धृतजैन-मन्दिरस्थस्तृतीयः शिलालेखः ।

प्रणमदमरप्रेङ्खन्मौलिस्फुरन्मणिधोरणी
तरुणकिरणश्रेणीशोणीकृताखिलविग्रह' ।
सुरपतिकरोन्मुक्तै स्ना(?)त्रोदकैर्घुसृणारुण-
प्लुततनुरिवापायात्पायाज्जगन्ति शिवाङ्गजः ॥

स्वस्ति श्रीविक्रमसवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणहिलपुरवास्तव्यप्राग्वाटान्वयप्रसूत ठ श्रीचण्डपालात्मज ठ श्रीचण्डप्रसादाङ्गज ठ॰ श्रीसोमतनुज ठ॰ श्रीआशाराजनन्दनस्य ठ॰ श्रीकुमारदेवीकुक्षिसभूतस्य ठ श्रीलुणिग मह० श्रीमालदेवयोरनुजस्य मह० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे मह० श्रीललितदेवीकुक्षिसरोवरराजहसायमाने मह० श्रीजयन्तसिंहे स० ७९ वर्षपूर्व स्तम्भनकतीर्थमुद्राव्यापार व्यापृण्वति सति स० ७७ वर्षे श्रीशत्रुंजयोज्जयन्तप्रभृति महातीर्थयात्रोत्सवप्रभाविताविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसघाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजश्रीलवणप्रसाददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन सं० ७६ वर्षपूर्व गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारान्व्यापृण्वता मह० श्रीतेजःपालेन च शत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथान्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिताः । तश्च सचिवेश्वर-

श्रीवस्तुपालेनेह स्वय निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थ-करश्रीऋषभदेवस्तम्भनकपुरावतारश्रीपार्श्वनाथदेवश्रीसत्यपुरावतार श्रीमहावीरदेवप्रशस्तिसहितकाश्मीरावतार श्रीसरस्वतीमूर्तिदेवकुलिका-चतुष्टयजिनयुगलाम्बावलोकनाशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथदेवाल-कृतदेवकुलिकाचतुष्टयतुरगाधिरूढनिजपितामह ठ श्रीसोमस्वपितृ ठ श्रीआशाराजमूर्तिद्वितयकुजराधिरूढमहामात्यश्रीवस्तुपालानुज मह० श्रीतेजःपालमूर्तिद्वयचारुतोरणत्रयश्रीनेमिनाथदेव आत्मीयपूर्वजाग्रजानुज-पुत्रादिमूर्तिसमन्वितसुखोद्घाटनकस्तम्भश्रीसमेत(द)महातीर्थप्रभृति अनेक-तीर्थपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहा-तीर्थे आत्मनस्तथा स्वभार्यायाश्च प्राग्वाटजातीय ठ श्रीकान्हडपुत्र्या ठ राणुकुक्षिसभूताया मह० श्रीसोखुकाया पुण्याभिवृद्धये श्रीनागे-न्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसताने शिष्यश्रीशान्तिसूरिशिष्यश्रीआ-णन्दसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालकरण प्रभुश्री-विजयसेनसूरिप्रतिष्ठित ऋषभदेवालकृतोऽयमभिनवः समण्डपः श्रीअष्टा-पदमहातीर्थावतारनिरुपमप्रधानप्रासाद कारित ।

प्रासादैर्गगनाङ्गणप्रणयिभिः पातालमूलंकषैः
कासारैश्च सितै' सिताम्बरगृहैर्नीलैश्च लीलावनैः ।
येनेय नयनिर्जितेन्द्रसचिवेनालकृताल क्षिति
क्षेमैकायतना चिरायुरुदयी श्रीवस्तुपालोऽस्तु स' ॥

सदिष्ट तव वस्तुपालवलिना विश्वत्रयी यात्रिका-
न्मत्वा नारदतश्चरित्रमिति ते हृष्टोऽस्मि नन्द्याश्चिरम् ।
नार्थिभ्य' क्रुधमर्थित. प्रथयसि स्वल्प न दत्से न च
स्वश्लाघा बहु मन्यसे किमपर न श्रीमदान्मुह्यति ॥

अखिलविदलनश्रीवीरनामायमुर्व्यां
सरपतिरवतीर्णस्तर्कयामास्तदस्य ।
निवसति सुरशाखी वस्तुपालाभिधानः
सुरगुरुरपि तेजःपालसज्ञः समीपे ॥

उदारः शूरो वा रुचिरवचनो वास्ति न हि वा
भवत्तुल्यः कोऽपि क्वचिदिति चुलुक्येन्द्रसचिव ।
समुद्भूतभ्रान्तिर्नियतमवगन्तु तव यश-
स्ततिर्गेहे गेहे पुरि पुरि च याता दिशि दिशि ॥

सा कुत्रापि युगत्रयी बत गता सृष्टा च सृष्टिः सतां
सीदत्साधुरसचरत्सुचरितः खेलत्खलोऽभूत्कलिः ।
तद्विश्वार्तिनिवर्तनैकमनसा प्रत्तोऽधुना शम्भुना
प्रस्तावस्तव वस्तुपाल भवते यद्रोचते तत्कुरु ॥

के निधाय वसुधातले वन वस्तुपाल न यमालय गताः ।
त्व तु नन्दसि निवेशयन्निदं दिक्षु धावति जने क्षुधावति ॥

पौत्रेण धारय वराहपते धरित्रीं
सूर्य प्रकाशय सदा जलदाभिषिञ्च ।
विश्राणितेन परिपालय वस्तुपाल
भार भवत्सु यदिम निदधे विधाता ॥

आत्मा त्व जगत' सदागतिरियं कीर्तिर्मुखं पुष्कर
मैत्री मन्त्रिवर स्थिरा घनरसः श्लोकस्तमोघ्न. शमः ।
नोक्त. केन करस्तवामृतकरः कायश्च भास्वानिति
स्पष्ट धूर्जटिमूर्तयः कृतपदा श्रीवस्तुपाल त्वयि ॥

विद्या यद्यपि वैदिकी न लभते सौभाग्यमेषा क्वचि-
न्न स्मार्त कुरुते च कश्चन वचः कर्णद्वये यद्यपि ।
राजानः कृपणाश्च यद्यपि गृहे यद्यप्यय च व्यय-
श्चिन्ता कापि तथापि तिष्ठति न मे श्रीवस्तुपाले सति ॥

कर्णे खलप्रलपितं न करोषि रोष
नाविष्करोषि न करोष्यपदे च लोभम् ।
तेनोपरि त्वमवनेरपि वर्तमानः
श्रीवस्तुपाल कलिकालमधःकरोषि ॥

सर्वत्र भ्रान्तिमती सर्वविदस्त्वद्भवत्कथ कीर्ति । 
श्रीवस्तुपालपितृकमनुहर्त्ते सम्प्रति प्राय ॥
सोऽपि बलेरवलेप स्वल्पतरोऽभूत्तथैव कल्पतरो ।
श्रीवस्तुपालसचिवे सिञ्चति दानामृतैर्जगतीम् ॥

नियोगिनागेषु नरेश्वराणा भद्रस्वभाव खलु **वस्तुपालः** ।
उद्दामदामप्रसरस्य यस्य विभाव्यते क्वापि न मत्तभाव ॥

विबुधै. पयोधिमध्यादेको बहुत. करी दुरुपलब्ध ।
बहवस्तु वस्तुपालप्राप्ता विबुध त्वयैकेन ॥
प्रथम धनप्रवाहैर्वनरथनाथात्मज सचिव ।
अधुना तु सुकृतसिन्धुर वृन्दै प्रमोदयति ॥
**श्रीवस्तुपाल** भवता जलधेर्गम्भीरता किलाकलिता ।
आनीय ततो गजता श्वपतिद्वारे यदाकलिता ॥

एते श्रीमद्गुर्जरेश्वरपुरोहित ठ श्रीसोमेश्वरदेवस्य ।

इह वालिगसुतसहजिगपुत्रानकतनुजवाजडतनूज ।
अलिखदिम **कायस्थः स्तम्भपुरीयो ध्रुवो जयतसिंहः** ॥
हरिमण्डपनन्दीश्वर शिल्पीश्वर **सोमदेवपौत्रेण** ।
**बकुलस्वामिसुतेनोत्कीर्णा पुरुषोत्तमेनेयम्** ॥

महामात्यश्रीवस्तुपालस्य प्रशस्तिरियं निष्पन्ना ६०३ ।

श्रीनेमेस्त्रिजगद्भर्त्तुरम्बायाश्च प्रसादत. ।
**वस्तुपालान्वयस्यास्तु** प्रशस्ति स्वस्तिशालिनी ॥

महामात्य**वस्तुपाल**भार्या मह० श्रीसोखुकाया धर्मस्थानमिदम् ॥

(गिरनार इन्स्क्रिप्शन्स् न० २ । २४-२५)

---

## (१७१)

## गिरनारपर्वतस्थवस्तुपालतेजःपालजीर्णोद्धृतजैनमन्दिरस्थश्चतुर्थः शिलालेखः।

तीर्थेशा प्रणतेन्द्रसंहतिशिरःकोटीरकोटिस्फुट-
त्तेजोजालजलप्रवाहलहरीप्रक्षालिताङ्घ्रिद्वय. ।
ते व केवलमूर्तयो धवलितारिष्टा विशिष्टाममी
तामष्टापदशैलमौलिमणयो विश्राणयन्तु श्रियम् ॥

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुण सुदि १० बुधे श्रीमदणहिलपुरवास्तव्यप्राग्वाटान्वयप्रसूत ठ श्रीचण्डपालात्मजश्रीचण्डप्रसादाङ्गज ठ श्रीसोमतनुज ठ श्रीआशाराजनन्दनस्य ठ श्रीकुमारदेवीकुक्षिसंभूतस्य ठ श्रीलुणिग मह० श्रीमालदेवयोरनुजस्य महं० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे मह० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने मह० श्रीजयन्तसिंहे सं० ७ वर्षे पूर्वं स्तम्भतीर्थवेलाकुलमुद्राव्यापार व्यापृण्वति सति सं० ७७ श्रीशत्रुंजयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सवप्रभावाविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजश्रीलवणप्रसाददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन सं० ७६ वर्षे पूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापार व्यापृण्वता मह० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथान्यसमस्तस्थानेष्वपि कोटिशो धर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिताः। तथा सचिवेश्वरश्रीवस्तुपालेनेह स्वय निर्मापितशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थंकरश्रीऋषभदेवस्थ(स्त)म्भनकपुरावतारश्रीपार्श्वनाथदेवसत्यपुरावतारश्रीमहावीरदेवप्रशस्तिसहितकश्मीरावतारश्रीसरस्वती-

देवकुलिकाचतुष्टययुगलाम्बावलोकनशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथकुलालङ्कृतदेवकुलिकाचतुष्टयतुरगाधिरूढनिजपितामह ठ श्रीसोमपितृ ठ. श्रीआशाराजमूर्त्तिद्वितयतोरणत्रयश्रीनेमिनाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्त्तिसमन्वितसुखोद्धाटनकस्तम्भश्रीसमेतावतारमहातीर्थप्रभृति अनेककीर्त्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे आत्मनस्तथा स्वभार्याया प्राग्वाटजातीय ठ कान्हडपुत्र्या. ठ राणुकुक्षिसभूताया मह० श्रीसोखुकाया. पुण्याभिवृद्धये श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसताने शिष्यश्रीशान्तिसूरिशिष्यश्रीआणन्दसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालकरणश्रीविजयसेनसूरिप्रतिष्ठितश्रीमदादिजिनराजश्रीऋषभदेवप्रमुखचतुर्विंशतितीर्थंकरालङ्कृतोऽयमभिनव समण्डप श्रीअष्टापदमहातीर्थावतारप्रधानप्रासाद' कारित ।

स्वस्ति श्रीवलये नमोऽस्तु नितरा कर्णाय दाने ययो-
रस्पष्टेऽपि दृशा यश कियदिद वन्धास्तदेता' प्रजाः ।
दृष्टे सप्रति वस्तुपालसचिवत्यागे करिष्यन्ति ता
कीर्त्तिं काचन या पुन. स्फुटमिय विश्वोऽपि नो भास्यति ॥

कोटीरै कटकाङ्गुलीयतिलकै. केयूरहारादिभि.
कौशेयैश्च विभूष्यमाणवपुषो यत्पाणिविश्राणितै ।
विद्वासो गृहमागता. प्रणयिनीरप्रत्यभिज्ञाभृत-
स्तैस्तैः स्वाशपथै कथ कथमिव प्रत्याययाचक्रिरे ॥

व्यास व्यातनुता विरोचनसुतस्त्याग कवित्वश्रिय
भासव्यासपुर सरा पृथुरघुप्रायाश्च वीरव्रतम् ।
प्राज्ञा नाकिपताकिनीगुरुरपि श्रीवस्तुपाल ध्रुव
जानीमो न विवेकमेकमकृतोत्सेकं तु कौतस्कुतम् ॥

वास्तव वस्तुपालस्य वेत्ति कश्चरिताद्भुतम् ।
•यस्य दानमविश्रान्तमर्थिष्वपि रिपुष्वपि ॥

स्तोतव्यं खलु वस्तुपालसचिवः कैर्नाम वाग्वैभवै-
र्यस्य त्यागविधिर्विधूय विविधां दारिद्र्यमुद्रां हठात् ।
विश्वेऽस्मिन्नखिलेऽप्यसूत्रयदसावर्थातिदानेति च
द्वौ शब्दावभिधेयवस्तुविरहव्याहन्यमानस्थिती ॥

आद्येनाप्यपवर्जनेन जनितार्थित्वप्रमाथान्पुन
स्तोक दत्तमतिक्रमान्तरगतानाह्वाययन्नर्थित' ।
पूर्वसाद्गुणसख्ययापि गुणित यस्तेष्वनावर्त्तिषु
द्रव्य दातुमुदस्तहस्तकमलस्तस्थौ चिर दु.स्थितः ॥

विश्वेऽस्मिन्किल पङ्कपङ्किलतले प्रस्थानवीथीर्विना
सीदन्नेष पदे पदेन पुरतो गन्तेति संचिन्तयन् ।
धर्मस्थानशतच्छलेन विदधे धर्मस्य वर्षीयस
सचाराय शिलाकलापपदवीं श्रीवस्तुपाल स्फुटम् ॥

अम्भोजेषु मरालमण्डलरुचो डिण्डीरपिण्डत्विष.
कासारेषु पयोधिरोधसि लुठन्निर्णिक्तमुक्ताश्रिय' ।
ज्योत्स्नाभा' कुमुदाकरेषु सदनोद्यानेषु पुष्पोल्बणा
स्फूर्त्तिं कामिव वस्तुपाल कृतिन' कुर्वन्ति नो कीर्त्तयः ॥

देव स्वर्नाथ कष्ट ननु क इव भवान्नन्दनोद्यानपाल.
खेदस्तत्कोऽद्य केनाप्यहह हतहृतः काननात्कल्पवृक्षः ।
हुं मा वादीस्तदेतत्किमपि करुणया मानवाना मयैव
प्रीत्यादिष्टोऽयमूर्व्यास्तिलकयति तल वस्तुपालच्छलेन ॥

श्रीमन्त्रीश्वरवस्तुपालयशसामुच्चावचैर्वीचिभिः
सर्वस्मिन्नपि लम्भिते धवलता कल्लोलिनीमण्डले ।
गङ्गेवेयमिति प्रतीतिविकलास्ताम्यन्ति कामं भुवि
भ्राम्यन्तस्तनुसादमन्दितमुदो मन्दाकिनीयात्रिकाः ॥

वक्त्र निर्वासनाज्ञानयनपथगत यस्य दारिद्र्यदस्यो-
र्दृष्टिः पीयूषवृष्टिः प्रणयिषु परितः पेतुषी सप्रसादम् ।

प्रेमालापस्तु कोऽपि स्फुरदसमपरब्रह्मसवादवेदी
नेदीयान्वस्तुपालः स खलु यदि तदा को न भाग्यैकभूतिः ॥
साक्षाद्ब्रह्मपर धरागतमिव श्रेयो विवर्त्तं सता
तेजःपाल इति प्रसिद्धमहिमा तस्यानुजन्मा जयी।
यो धत्ते न दशा कदापि कलितावद्यामविद्यामयीं
य चोपास्य परिस्पृशन्ति कृतिन सद्य परा निर्वृतिम् ॥
आकृष्टे कमलाकुलस्य कुदशारम्भस्य सस्तम्भन
वश्यत्व जगदाशयस्य यशसा मासान्तनिर्वासनम्।
मोह' शत्रुपराक्रमस्य मृतिरप्यन्याय दस्योरिति
स्वैर षड्विधकर्मनिर्मितमया मन्त्रोऽस्य मन्त्रीशितु' ॥
एते मलधारिनरेन्द्रसूरिणाम्।
स्तम्भतीर्थेऽत्र कायस्थवशे वाजडनन्दन'।
प्रशस्तिमेतामलिखज्जैत्रसिंहभुवः सुधी ॥
हरिमण्डप न० नेय २ श्रीवस्तुपालप्रभोः प्रशस्तिरिय निष्पन्ना ॥
मङ्गल महाश्री' ॥
(गिरनार इन्स्क्रिप्शन्स् न० २। २६-२७)

---

## (१७२)

## गिरनारपर्वतस्थवस्तुपालतेजःपालजीर्णोद्धृतजैन-मन्दिरस्थः पञ्चमः शिलालेखः।

ये दुज्जयन्त ... .. .. जयाभूप्रजाकल्याणा।

स्वस्ति श्रीविक्रमसवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणहिलपुरवास्तव्यप्राग्वाटान्वयप्रसूत ठ श्रीचण्डपालात्मज ठ श्रीचण्डप्रसादाङ्गज ठ श्रीसोमतनुज ठ श्रीआशाराजनन्दनस्य ठ श्रीकुमारदेवीकुक्षिसभूतस्य ठ. श्रीलुणिग मह० श्रीमालदेवयोरनुजस्य मह० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे मह० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने मह० श्रीजयन्तसिंहे सं० ७८ वर्षपूर्वं स्तम्भतीर्थे

मुद्राव्यापारान्व्यापृण्वति सति स० ७७ वर्षे शत्रुंजयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सवप्रसादाविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसघाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्त्तण्डमहाराजाधिराजश्रीलवणप्रसाददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन स० ७६ वर्षपूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापार व्यापृण्वता मह० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथान्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिता.। तथा सचिवेश्वरश्रीवस्तुपालेनेह स्वय निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदातीर्थकरश्रीऋषभदेवस्तम्भनकपुरावतारश्रीपार्श्वनाथदेवसत्यपुरावतारश्रीमहावीरदेवप्रशस्तिसहितकश्मीरावतारश्रीसरस्वतीमूर्तिकुलिकाचतुष्टयजिनयुगलाम्बावलोकनाशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथदेवालकृतदेवकुलिकाचतुष्टयतुरगाधिरूढस्वपिता मह० श्रीसोमनिजपितृ ठ श्रीआशाराजमूर्तिद्वयचारुतोरणत्रयश्रीनेमिनाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिसमन्वितसुखोद्धाटनकस्तम्भश्रीअष्टापदमहातीर्थप्रभृति अनेककीर्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे आत्मनस्तथा स्वधर्मचारिण्या' प्राग्वाटजातीय ठ श्रीकन्हडपुत्र्या. ठ राणुकुक्षिसंभूताया मह०-श्रीललितादेव्याः पुण्याभिवृद्धये श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसताने शिष्यश्रीशान्तिसूरिशिष्यश्रीआणन्दसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालकारप्रभुश्रीविजयसेनसूरिप्रतिष्ठितश्रीअजितनाथदेवादिविंशतितीर्थकरालकृतोऽयमभिनव. समण्डपः श्रीसमेतमहातीर्थावतारप्रासाद. कारित ।

स श्रीजिनाधिपतिधर्मधुराधुरीणः
श्लाघास्पद कथमिवास्तु न वस्तुपालः ।
श्रीशारदासुकृतकीर्तिनयादिवेण्या
पुण्यः परिस्फुरति जङ्गमसगमो यः ॥

विभुता विक्रमविद्या विदग्धता वित्तवितरणविवेकैः।
य' सप्तभिर्विकारै' कलितोऽपि बभार न विकारम् ॥
यस्य भू. किमसावस्तु वस्तुपालसुत. सदा।
नावर्णनीयावप्येतौ धर्मकर्मकृतौ कृतौ ॥
कस्यापि कविता नास्ति विनास्य हृदये सुखम्।
वास्तव **वस्तुपालस्य** पश्यामस्तद्वय च यम् ॥
दुर्ग स्वर्गगिरि सकल्पतरुभिर्भेजे न चक्षु'पथे
तस्मै कामगवी जगाम जलधेरन्त स चिन्तामणि'।
कालेऽस्मिन्नवलोक्य यस्य करुण तिष्ठत कोऽन्य स्वत
पुण्य सोऽस्तु न **वस्तुपाल**सुकृती दानैकवीर कथम् ॥
सोऽय मन्त्री गुरुरतितरामुद्धरन्धर्मभार
श्लाघाभूमि नयति न कथ **वस्तुपाल'** सहेलम्।
**तेजःपालः** स्वबलधवल' सर्वकर्मीणबुद्धि-
र्द्वैतीयीक कलयतितरा यस्य धौरेयकत्वम् ॥
एतस्मिन्वसुधासुधाजलधरे श्री**वस्तुपाले** जग-
ज्जीवातौ सितयोच्चयैर्नवनवैर्नक्त दिव वर्षति।
आस्वातन्यजनाघनोज्झितशशीज्योत्स्नाच्छवल्गद्गुणो-
द्भूतैरद्य .. .. ....... .. .... ॥
लक्ष्मीर्मन्थाचलेन्द्रभ्रमणपरिचयादेव पारिप्लवेयं
भ्रूभृङ्गस्यैव भङ्गाच्चकितमृगदृशा प्रेमनस्थेतरस्य।
आयुर्निश्वासवायुप्रणयपरतयैवेवमस्थैर्यदु स्थ
स्थास्नुर्धर्मोऽयमेक परमितिहृदये **वस्तुपालेन** मेने ॥
**तेजःपालस्य** विष्णोश्च क स्वरूपं निरूपयेत्।
स्थित जगत्रयीं पातु यदा यो वरकन्धरे ॥
**ललितादेवी**नाम्ना सधर्मिणी **वस्तुपालस्य**।
अस्यामनिरस्तनयस्तनयोऽय **जयन्तसिंह**ाख्य. ॥

दृष्ट्वा वपुश्च वृ'' 'च परस्परविरोधिनी ।
विवादा 'जैत्रसिंहस्तारुण्यवाद्रि(?)कः ॥

कृतिरियं मलधारिश्रीसरचन्द्रसूरीणाम् ॥

स्तम्भतीर्थेऽत्र कायस्थवंशे वाजडनन्दनः ।
प्रशस्तिमेतामलिखज्जैत्रसिंहश्रुवः सुधीः ॥
वाडहस्य तनूजेन सूत्रधारेण धीमता ।
एषा कुमारसिंहेन समुत्कीर्णा प्रयत्नतः ॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादतः ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥

(गिरनार इन्स्क्रिप्शन्स् न० २ । २७–२९)

---

## (१७३)

## गिरनारपर्वतस्थवस्तुपालतेजःपालजीर्णोद्धृतजैनमन्दिरस्थः षष्ठः शिलालेखः ।

समेताद्रिशिरःकिरीटमणयः सेरससाहकृति-
ध्वंसोल्लासितकीर्तय शिवपुरप्राकारतारश्रियः ।
आनत्यश्रितसंविदादिविलसद्रत्नौघरत्नाकरा
कल्याणावलिहेतवः प्रतिकल ते सन्तु वस्तीर्थपाः ॥

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुण सुदी १० बुधे श्रीमदणहिलपुरवास्तव्यप्राग्वाटकुलालकरणश्रीचण्डपालात्मज ठ. श्रीचण्डप्रसादाङ्गज ठ श्रीसोमतनूज ठ श्रीआशाराजनन्दनस्य ठ श्रीकुमारदेवीकुक्षिसंभूतस्य ठ श्रीलुणिग महं० श्रीमालदेवयोरनुजस्य महं० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने महं० श्रीजयन्तसिंहे सं० ७९ वर्षपूर्वं स्तम्भतीर्थमुद्राव्यापारान् व्यापृण्वति सति सं० ७७ वर्षे श्रीशत्रुंजयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सवप्रभाविताविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधि-

राजश्रीलवणप्रसाददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन स० ७६ वर्षपूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारान् व्यापृण्वता मह० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथा अन्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिता । तथा श्रीशारदाप्रतिपन्नपुत्रसचीवेश्वरश्रीवस्तुपालेन स्वसधर्मचारिण्या प्राग्वाटजातीय ठ श्रीकान्हडपुत्र्या ठ राणुकुक्षिसभूताया मह० श्रीललितादेव्यास्तथा आत्मन पुण्याभिवृद्धये इह स्वय निर्मापितश्रीशत्रुंजयमहातीर्थावतार श्रीमदादितीर्थंकर श्रीऋषभदेवस्तम्भनकपुरावतार श्रीपार्श्वदेवसत्यपुरावतार श्रीमहावीरदेवप्रशस्तिसहित काश्मीरावतारश्रीसरस्वतीमूर्तिदेवकुलिकाचतुष्टयजिनयुगल अम्बावलोकनाशाम्ब प्रद्युम्नशिखरेषु श्रीनेमिनाथदेवालङ्कृत देवकुलिकाचतुष्टयतुरगाधिरूढ निजपितामह ठ श्रीसोमस्वपितृ ठ आशाराजमूर्तिद्वितीयचारुतोरणत्रय श्रीनेमिनाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिसमन्वितसुखोद्घाटनकस्तम्भ श्रीअष्टापदमहातीर्थप्रभृति अनेककीर्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसताने शिष्यश्रीशान्तिसूरिशिष्य श्रीआनन्दसूरि श्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालकरणप्रभु श्रीविजयसेनसूरिप्रतिष्ठित श्रीमदजितनाथदेवप्रमुखविंशतितीर्थंकरालङ्कृतोऽयमभिनव. समण्डप श्रीसंमेतावतारमहातीर्थे प्रासाद. कारित.।

मुष्णाति प्रसभं वसु द्विजपतेर्गौरीगुरु लङ्घय-
न्नो धत्ते परलोकतो भयमहो हसापलापे कृती ।
उच्चैरास्तिकचक्रवालमुकुटश्रीवस्तुपाल स्फुट
भेजे नास्तिकतामय तव यश पूर कुतस्त्यामिति ॥

चञ्चेपाटोपपरै. परैश्चलचमूरङ्गत्तुरङ्गक्षत-

क्षोणीक्षोदवशादशेषजलधि श्रीस्तम्भतीर्थे पुरे ।
स्वेदाम्भस्तटिनीघटाघटनया श्रीवस्तुपाले स्फुर-
त्तेजस्तिग्मगभस्तितप्ततनुभिस्तैरेव सपूरितः ॥
दिग्यात्रोत्सववीरवीरधवलक्षोणीधवाध्यासित
प्राज्य राज्यरथस्य भारमभित. स्कन्धे दधल्लीलया ।
भाति भ्रातरि दक्षिणे समगुणे श्रीवस्तुपालः कथ
न श्लाघ्य. स्वयमश्वराजतनुज काम स वामस्थितिः ॥
लावण्याङ्ग इति द्युतिव्यतिकरै. सत्याभिधानोऽभव-
द्भ्राता यस्य निशानिशान्तविकसच्चन्द्रप्रकाशानन. ।
शङ्के शकरकोपसभ्रमभरादासीदनङ्गस्मर.
साक्षादङ्गमयोऽयमित्यपह्नुतः स्वर्गाङ्गनाभिर्लघु ॥
रक्तः सद्रतिभावभाजि चरणे श्रीमल्लदेवोऽपरो
यद्भ्राता परमेष्ठिवाहनतया प्राप्त प्रतिष्ठा पराम् ।
खेलन्निर्मलमानसे न समय क्वापि श्रयन्पङ्किलं
विश्वे राजति राजहस इव यः सशुद्धपक्षद्वय' ॥
सोऽय तस्य सुधारहस्यकवितानिष्ठ. कनिष्ठ. कृती
बन्धुर्बन्धुरबुद्धिबोधमधुर. श्रीवस्तुपालाभिधः ।
ज्ञानाम्भोरुहकोटरे भ्रमरता सारङ्गसाम्य यशः
सोमे सौरितुला च यस्य महिमक्षीरोदधौ स्व दधौ ॥
इन्दुर्बिन्दुरपा सुरेश्वरसरिड्डिण्डीरपिण्ड' पति-
र्भासा विद्रुमकन्दलः किल विभु श्रीवत्सलक्ष्मा नभः ।
कैलासत्रिदशेभशम्भुहिमवत्प्रायास्तु मुक्ताफल-
स्तोम कोमलवालुकास्य च यश क्षीरोदधौ कौमुदी ॥
हस्ताग्रन्यस्तसारस्वतरसरसनप्राप्तमाहात्म्यलक्ष्मी-
स्तेजःपालस्ततोऽसौ जयति वसुभरै. पूरयन्दक्षिणाशाम् ॥
यद्बुद्धिः कलिभ ** (?)द्विपगहनपरक्षोणिभृद्बुद्धिसप-
ल्लोपामुद्राधिपस्य स्फुरति लसदिनस्फारसचारहेतुः ॥

पुण्यश्रीर्भुवि मल्लदेवतनयोऽभूत्पुण्यसिंहो यशो-
वर्य स्फूर्जति जैत्रसिह इति तु श्रीवस्तुपालात्मज. ।
तेजःपालसुतस्त्वसौ विजयते लावण्यसिहः स्वयं
यैर्विश्वे भवदेकपादपि कलौ धर्मश्चतुष्पादयम् ॥
एते श्रीनागेन्द्रगच्छे भट्टारकश्रीउदयप्रभसूरीणाम् ।
स्तम्भतीर्थेऽत्र कायस्थवशे वाजडनन्दनः ।
प्रशस्तिमेतामलिखज्जैत्रसिंहभुव सुधी. ॥
वाहडस्य तनूजेन सूत्रधारेण धीमता ।
एषा कुमारसिंहेन समुत्कीर्णा प्रयत्नत ॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादत ।
वस्तुपालान्वयस्यास्ति प्रशस्ति स्वस्तिशालिनी ॥
श्रीवस्तुपालप्रभोः प्रशस्तिरियं निष्पन्ना । शुभ भवतु ॥

(गिरनार इन्स्क्रिप्शन्स्-न० २ । २९-३०)